# संस्कृतनिबन्धावली


LIBRARY

रचयिता
डॉ० हरिनारायणदीक्षितः
एम०ए०, पी-एच० डी०, डी०लिट्०,
व्याकरणाचार्यः, सांख्य-योगाचार्यः, साहित्याचार्यः, साहित्यरत्नम्
संस्कृतविभागाध्यक्षः
कुमायूंविश्वविद्यालयः, नैनीतालः (उत्तरप्रदेशः)

ईस्टर्न बुक लिंकर्स
दिल्ली :: भारतम्

# SANSKRIT NIBANDHĀVALĪ

By
**DR. HARI NARAYAN DIKSHIT**
M. A., Ph. D., D. Litt, Vyakaranacharya,
Sankhyayogacharya, Sahityacharya, Sahityaratna
Head of the Department of Sanskrit,
Kumaun University, NAINITAL (U. P.)

Eastern Book Linkers
DELHI :: INDIA

Book : SANSKRIT NIBANDHĀVALĪ
Author : DR. HARI NARAYAN DIKSHIT
Publishers : Eastern Book Linkers
5825, New Chandrawal Road,
Jawahar nagar, Delhi-110007

Edition : First, 1985
Price : Rs.


Copy right

Printers : Amar Printing Press,
8/25, Vijay Nagar, Delhi-110009

## समर्पणम्

कृत्वा कठोररचनां बहु भाययन्ति
लोकान् स्वभावसरलानिह संस्कृताद् ये ।
तेभ्यो ललाटनतिपूर्वकमर्पयामि
स्वीयां निबन्धरचनां सुरवाग्विभूत्यै ।।

—हरिनारायणदीक्षितः

# आमुखम्

अहमद्य अमन्दमानन्दमनुभवामि इदमनुभूय यन्मदीयेषु निवन्धेषु केचिन्निबन्धाः ग्रन्थरूपेण समवेताः प्रकाशिताश्च भूत्वा सुरभारती-समुपासकानां तथा संस्कृतभाषातरीकर्णधाराणां सेवायां गच्छन्तः सन्ति। यद्यपि एतेषां निबन्धानां सर्जना परिमितसमयव्यापिनी विद्यते, किन्तु एतदीयः प्रभावो नूनमेव असीमितसमयव्यापी भविष्यतीति समाशासे।

इमे निबन्धाः कीदृशाः सन्ति ? रम्याः सन्ति अरम्या वा ? ललिताः सन्ति अललिता वा ? रोचकाः सन्ति अरोचका वा ? शोभनाः सन्ति अशोभना वा ? लाभदाः सन्ति अलाभदा वा ? प्रेरकाः सन्ति अप्रेरका वा ? हृद्याः सन्ति अहृद्या वा ? सुवोधाः सन्ति दुर्वोधा वा ? सुभाषाः सन्ति दुर्भाषा वा ? सुभावाः सन्ति दुर्भावा वा ?—इत्यादिविचारक-रणन्तु सदसद्व्यक्तिशक्तिमतां निर्मलमतिमतां संस्कृतवाङ्मयाब्धि-स्वाध्यायमन्थनोत्थज्ञानरत्नराशिदीप्तिमतां विपश्चितामेव कार्य-मस्ति। तद्विषये अहं किं कथयानि ? मन्ये त एवेदं विचारयितुं कृपां करिष्यन्ति। अहन्तु केवलमिदमेवात्र कथयामि यदेतानधीत्य यदि गीर्वाणवाणीसपर्यापराणां सहृदयहृदयधुरीणानां सचेतसां विदुषां मनागपि मनस्तोषो भविष्यति; यदि चैते निवन्धाः संस्कृतभाषायाः निवन्धोद्याने आर्जवसौरभाभिवृद्धये मनागपि कल्पिष्यन्ते, तदाहं मंस्ये यन्मामकः परिश्रमः सफलो भूतवानस्ति।

एतेषां समेषामेव निबन्धानां मुद्रणापेक्ष्यलिपिवद्धरूपसंविधाने, कुमायूंविश्वविद्यालयीयसंस्कृतविभागे लेक्चरर्पदमलङ्कुर्वाणया, एम. ए —पी-एच. डी. —साहित्याचार्योपाधिविभूषितया डॉक्टर किरण टण्डनया सहर्षं स्वीयो वहुमूल्यवान् समयो यापितोऽस्ति। एतदर्थं तदर्थं भूयो भूयो हार्दिकाननेकान् धन्यवादानुपहरामि।

इत्थमेव च निवन्धसंग्रहरूपस्यास्य ग्रन्थस्य सहर्षं सोत्साहं सत्वरं यथाशक्ति च ससौष्ठवं प्रकाशनं विधाय श्रीश्यामलाल मल्होत्रा-महोदयोऽपि नूनमेव मदीयहार्दिकधन्यवादपात्रतां विभर्त्ति ।

इत्येतैः परिमितैरेव शब्दैः समं स्वीयान् वक्ष्यमाणान् कतिपयान् निवन्धान् भारतीविभूतिहेतवे तथा भारतीभक्तप्रीतये संस्कृतसाहित्य-समीक्षासंसारस्य समक्षं प्रस्तुवन्नाशासे यन्मदीयोऽभिलाषाङ्कुरोऽयं सत्वरं पल्लवितः पुष्पितः फलितश्च भविष्यति ।

नैनीतालः —हरिनारायणदीक्षितः

१५.६.८५

## निबन्ध सूची

पृष्ठ संख्या

## वेदानां महत्त्वम्

विदितवेदितव्येषु समधिगतयाथातथ्येषु संस्कृतवाङ्मयानवद्यानुशीलनसञ्जातनिर्मलान्तः-करणेषु पौरस्त्येषु पाश्चात्त्येषु वा विपश्चिदपश्चिमेषु कश्चिदपीदृशो विद्वद्विशेषो लोचनपथं श्रुतिपथं वा नावतरति यो धर्मार्थकाममोक्षहेतूनां निखिलज्ञानविज्ञानजीवातूनां परममहनीयानां मानवमननीयानाम् ऋग्यजुस्सामाथर्वसंज्ञकानां चतुर्णां वेदानां विश्वविश्रुतचरेण तिरस्कृताज्ञानराशितिमिरेण महीयसा गरीयसा प्रथीयसा च यशसा प्रभावितो नैव भूतो भवेत्। एते हि चत्वारोऽपि वेदाः कस्यां वरेण्यवेलायां निर्मितिपद्धतिमाजग्मुः, इत्यस्मिन् विषये सुमेधसा सुचिरायुषा वेधसापि निर्णेतुं न शक्यते। वस्तुतस्तु इमे काले काले तपःपूतात्मनां महात्मनाम् आर्षज्योतिष्मतां दिव्यचक्षुष्मतां महर्षीणां समक्षं स्वत एव प्राकट्यमापुः। ते च ते तपःपूतात्मानो महात्मानो मन्त्रदर्शनात् तत्तद्दृष्टमन्त्राणाम् 'ऋषयो' बभूवुः। अत एव 'ऋषयो मन्त्र-द्रष्टारः' इति वाक्यमपि प्राकाश्यमायातमस्ति। एतस्मादेव च हेतोः धीधनैः विद्वज्जनैः वेदा अपौरुषेया उच्यन्ते।

अथ वेदशब्दस्य कस्तावद् व्युत्पत्तिपथलभ्योऽर्थः, इतीदृशे संशयपाथोधौ समुच्छलति सति चित्ते ज्ञानार्थकविद्धातोः 'वेदनं वेदः', 'वेद्यते अनेन इति वेदः' इति भावे करणे वा घञि कृते सति 'वेदः' इति शब्दसिद्धिसरणिरेव सन्तरणी तरी जायते।

वेदानां वसुन्धरायां भूयान् विस्तरो वर्त्तते। विषयेऽस्मिन् श्रीमता भगवता पतञ्जलिना स्वीये हृद्यानवद्ये वैयाकरणवृन्दवन्द्ये महाभाष्ये पस्पशाह्निके प्रतिपादितमस्ति यद् 'चत्वारो वेदाः साङ्गाः

सरहस्याः बहुधा भिन्नाः; एकशतम् अध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधा अथर्वणो वेदः।' एतदतिरिक्तानि शिक्षा-व्याकरण-कल्प-निरुक्त-ज्योतिष-छन्दोनामानि षडङ्गान्यपि सन्ति वेदानाम्, यानि विना वेदानां परं पारं द्रष्टुं कश्चिदपि नैव प्रभवति। वस्तुतस्तु वेदानां महीयांसं महिमानं दर्शंदर्शं मामकं चेतस्तु नितरां मोमुह्यते। वेदाः निश्चयेनैव मानवसंस्कृतेः अग्रदूताः सन्तीत्यत्र केषामपि शेमुषीजुषां विदुषां विसंवादो नास्ति। मानवमर्यादाधिष्ठाता महाराजो मनुस्तु स्वीयायां 'मनुस्मृतौ' वेदानाम् अभ्यर्हितत्वं संभावयन् ऊर्ध्व-बाहुरिव भवन् समुपदिशति—

"यः कश्चित्कस्यचिद् धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥"

"वेदशास्त्रार्थतत्त्वज्ञो यत्रकुत्राश्रमे वसन्।
इहैव लोके तिष्ठन् ब्रह्मभूयाय कल्पते॥"

शतपथब्राह्मणेऽपि प्रतिपादितो वेदमहिमा आत्मानं संस्पृशति। यथा – 'यावन्तं ह वा इमां पृथिवीं वित्तेन पूर्णां ददत् लोकं जयति, त्रिस्तावन्तं जयति भूयांसञ्चाक्षय्यं य एवं विद्वानहरहः स्वाध्यायमधीते: तस्मात् स्वाध्यायोऽध्येतव्यः॥"

यथा भौतिकजगत्प्रपञ्चावलोकनाय भौतिकी नयनद्वयी समपेक्ष्यते, तथैव आध्यात्मिकप्रपञ्चप्रेक्षणाय वेदमयम् आर्ष ज्योतिरपेक्ष्यते। आध्यात्मिकाह्लादहेतुभूता दार्शनिकी विचार-वारि-धारापि वेदगह्वरादेव निर्गता विद्यते। इयम् विलीनापि तत्रैव जागर्ति। सांख्य-योग न्याय-वैशेषिक-मीमांसा-वेदान्तादीनां समस्तानां दर्शनाध्वनां वेदा एव प्रभवः सन्ति। एषां सर्वेषां भिन्नाध्वनां सरितां सागर इव निःश्रेयसाधिगम एव चरमोद्देश्य लक्ष्यते।

वेदानां महत्त्वं केवलेन अध्यात्मवादेन एव विदुषामन्तरालं नाधिरूढमस्ति, अपितु भौतिकभवाटवीभीमनाभिभूतये अपि तत्र प्राप्यमाणा विविधाः शङ्कापङ्ककलङ्करहिता सार्वभौमाः समाधयोऽपि हेतुभूताः सन्ति। यथाहि–

१. वर्णाश्रमव्यवस्था ।
२. स्त्रीपुरुषयोः समानमानार्हता ।
३. विवाहस्य अभेद्यता पवित्रता च ।
४. त्यागोपदेशः ।
५. राष्ट्रियभावना ।
६. हिंसानिषेधः ।
७. गम्यागम्यविमर्शः ।
८. पुनर्जन्मवादः ।
९. आयुर्वेदादिज्ञानविज्ञानसिद्धिः ।
१०. द्यूतादिदुर्व्यसननिषेधः ।
११. संघटनोपदेशः ।
१२. कर्मकाण्डोपदेशः ।
१३. अन्ताराष्ट्रियभावना ।
१४. गोमहिमा ।
१५. स्वसंस्कृतिस्नेहः ।
१६. स्वभाषासमादरः ।
१७. एवमन्यदपि ।

किम्बहुना, अस्मदीयाः पूर्वजाः स्वजीवनं कथं यापयामासुः ? तेषामाक्रीडनकानि कानि आसन् ? तेषां विवाहसम्बन्धाः कथङ्कारं यावज्जीवनम् अभेद्याः गुरुजनानुमोदिताः गुरुग्रन्थिबद्धाः आत्मानन्द-प्रयोजनाश्च बभूवुः ? कथं न ते पारस्परिकरूपमाधुरीमधुशीकरा-प्लाविताः वासनानदीपूरपूरिताः सन्तः क्षणभङ्गुराः अभूवन् ? अस्माकं ते पूर्वजाः केषां देवानाम् उपासनाम् अकार्षुः ? प्रतिवासरम् उदीयमानां रोचमानां दानशीलाम् उषोदेवीं ते केन विधिना पूजयामासुः ? उदेष्यन्तं भास्वन्तं कथङ्कारम् प्रातरुत्थाय अर्घपादोदकादिना विधिना प्रीणयामासुः ? सत्यामपेक्षायां कथङ्कारं सोत्साहं सोत्प्रासं ते इन्द्र-वरुण-पूषन्-मित्र-सवितृ-पर्जन्यादीनां प्रीतये स्तुतिपुरस्सरं तेषामर्चनां चक्रुः ? तदानीं च सामाजिकी राजनैतिकी वा अवस्थास्माकं कीदृशी बभूव ? इति चेज्जिज्ञासते कस्यापि चेतः, तदा निश्चप्रचमेव वेदवाङ्मयस्य स्वाध्यायमयं शरणमेव फलेग्रहि भविष्यति ।

एवञ्च काव्यतत्त्वदृशापि लौकिकसंस्कृतकविताकामिनीकान्तकलेवराक्रान्तमानसाः, कालिदासीयोपमामाधुरीमत्ताः, दण्डिपदलालित्यलीनचेतसः, बाणभट्टीयरसभावपेशलतापाशबद्धाः, भावुकाः, सहृदयहृदयाः, सुकुमारमतयो विपश्चितो भवन्तु नाम वेदवाङ्मये व्यर्थपरिश्रमाः; किन्तु निर्विशेषमतयो विद्वांसस्तु तत्रापि स्थाने स्थाने काव्यगतमिव सौन्दर्यं नयनपथीकर्त्तुं प्रभवन्त्येव। दृश्यकाव्यस्य तु आधारशिला एव वेदेषु विद्यते। अत एव भरतमुनिना स्वकीये नाट्यशास्त्रे उक्तमपि अस्ति—

'जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि॥"

एवं सत्यपि वेदानां महत्त्वे, यदाहं स्वकीयं भारतीयं समाजं पश्यामि तदा अनुभवामि यत् साम्प्रतं प्रायेण जनाः इमं वेदनिधिम् अनाद्रियमाणाः सन्ति। ते दुरन्तपूरोदरदरीपूरणनिमित्तीभूतां सम्प्रति आङ्ग्लभाषाम् येनापि केनापि विधिना अधीयानाः सन्ति। ये च केचन काशिकाः काश्मीरा वा वैदिकाः पण्डिताः वेदान् अधीयते, ते केवलम् अक्षराणि रटन्ति, तदीयं वास्तविकं समाजोपयोगि च तात्पर्यं नहि विदन्ति। एतत्सर्वमहृद्यमनुभूय मम खिद्यते चेतः, दूयते च देही। अन्ततो गत्वा मदीयं चित्तं तु इदमेव निश्चिनोति यदस्माभिः सर्वैरेव भारतीयैः ज्ञाननिधयो वेदाः साक्षाद् भगवदाकारा इव समादरणीयाः; एषां च विविधविधिभिः अनुशीलनं परिशीलनं वा करणीयम्; तदैवास्माकं सर्वविधम् ऐहिकम् आमुष्मिकञ्च कल्याणं भवितुं शक्नोतीत्यत्र मनागपि न संशयो विधेयः।

वेदानां विषये कतिपयाप्तोक्तिसमुद्धरणं नूनमेव भूयसे श्रेयसे स्यादिति समीहया काश्चनाप्तोक्तयोऽपि निबन्धावसाने समुद्ध्रियन्ते। यथाहि—

"सर्गादौ स्फुरतां समस्तजगतां यः श्रेयसे जज्ञिवान्
अर्थानभ्युदयाय संप्रथितवान् तांस्तांस्तु वैज्ञानिकान्।
यश्चोच्चावचभाववान् विविधसद्विद्याभिरुद्योतवान्
विश्वस्मिन् भुवने स वेदभगवान् भूयो भवे जृम्भताम्॥"

"नित्यानन्दमयी हवीरसमयी सच्चिन्मयी मुन्मयी
दिव्यालोकमयी शिवा मधुमयी पुण्या दयावार्मयी।
विद्याभूतिमयी सदोन्नतिमयी संवित्स्वरूपाक्षरा
सा माताखिललोकशोकशमनी वेदत्रयी पूज्यताम् ॥"

"यत्कान्तकीर्तिकूटेन कान्तमासीद्धि भारतम्।
दिव्यं तद् वैदिकं ज्योतिर्भासतां भूतले पुनः ॥"

इति सम्प्रत्यलं भावपल्लववितानसन्तानपरम्पराभिः भवादृशेषु विद्वद्वरेष्विति धियात्रैव विरमामि।

## गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः

इह विलक्षणगतिमति जगति जनश्चतुरशीतिलक्षसंख्यकान् विग्रहानतिक्रम्य परमदुर्लभं मानवदेहं लभते। अत्रापि पूर्वपूर्वजन्मसंस्कारसरणिः अनुपदमनारतं च तमनुसरति। येन स स्वकीयं वास्तविकं लक्ष्यम् अक्षिविषयीविधातुम् असमर्थ एव वोभूयते। भा-रतेऽस्मिन् भारते आध्यात्मिकविषयमाश्रित्य सांख्य-योग-न्याय-वंशेषिक-मोमांसा-वेदान्तादयो नैके राद्धान्ताः वरीवृत्यन्ते, इति भारतीयदर्शनशास्त्रजुषां विदुषां प्रत्यक्षमेवास्ते। परमेतेषु सर्वेषु पाण्डित्यस्यैव अकाण्ड ताण्डवं लभ्यते, येन अध्येतुः शिरो दूयते; बुद्धिः पराजयते; चेतश्च सर्वसम्मतसिद्धान्तलाभाभावात् सुतरां चेखिद्यते। यतो हि एते परस्परं विवदन्ते। एकस्य सिद्धान्तं भङ्क्तुम् अपरो बद्धपरिकरो लक्ष्यते। अत एव माध्यमिका अभिवदन्ति—

"वेदा विभिन्नाः स्मृतयो विभिन्ना
नासौ मुनिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः॥"

किन्तु उक्तदार्शनिकमार्गकण्टकजालजडीकृतचित्तस्य जनस्य यदा कदाचित् सौभाग्यात् दृष्टिः अधिगतयाथातथ्येन विदितवेदनीयेन सततं श्रुत्यनुशीलनसञ्जातनिर्मलान्तःकरणेन महर्षिणा वेदव्यासेन सश्रद्धं सादरं सुगीतायां पद्मनाभस्य मुखपद्माद् विनिःसृतायां 'श्रीमद्भगवद्गीतायाम्' समापतति, तदा स तथैव अमन्दानन्दसन्दोहमनुभवति यथा दिनकरकरनिकरसन्तप्तकलेवरः कश्चित्

पान्थो विकचारविन्दवृन्दपरिमलपूरपूरितसरसीतीरभाजं सान्द्रशीतलच्छायं त्रिविधसमीरणवाहं रमणीयतानिधानं विशालं वटानोकहं समुपलभ्य लभते । एतादृश्यामेव दशायाम्—

"गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद् विनिःसृता ॥"

इत्यादि वचः सङ्गच्छतेतमाम् ।

वस्तुतो गीतेयं लक्ष्यप्रधाना विद्यते, न तु पाण्डित्यविजृम्भणलीना । यतोहि युद्धारम्भस्य भयङ्करे केन्द्रबिन्दौ विद्यमानाय दोलायमानमानसाय अत एव वलैब्यमवलम्बितुकामाय प्रियतमाय पार्थायार्जुनाय परमपुरुषेण अमोघवचनेन योगिगम्येन योगिराजेन भगवता श्रीकृष्णेन समयस्य अलीयस्त्वं तथा अर्जुनस्य विषण्णत्वं निभाल्य परमसरलेष्वेव शब्देषु मानवजीवनस्य रहस्यं कर्त्तव्यजातं च सुतरां स्फुटं चास्फोटितमस्ति । किङ्कर्त्तव्यविमूढतायाः कथङ्कर्त्तव्यविमूढतायाश्च यदि क्वापि निर्भ्रान्तं परमसरलं च समाधानं लभ्यते, तर्हि तद् गीतायामेव । गीताया उपदेशो व्यष्टिकृते नास्ति । तत्र तु समष्टिमेव ध्यायं ध्यायं भगवता श्रीकृष्णेन धनञ्जयः समुपदिष्टोऽस्ति । धनञ्जयोऽपि तत्र समष्टेः प्रातिनिध्यं कुर्वन् प्रार्थयति—

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥"

दृश्यतान्तावदत्र 'धर्मसंमूढचेताः' इति विशेषणपदम् । इदं विशेषणं नाना धर्माणां रीतिवैचित्र्यं मूढतापादकत्वं च साधु अभिव्यनक्ति । वस्तुतस्तु संसारिणो जीवाः नानाधर्मसम्प्रदायरूपोत्तुङ्गतरङ्गमालाकुले भवार्णवे परिप्लवमानाः परं क्वापि पन्थानमलभमानाः बहुविधं व्याकुलायन्ते । ते न तु श्रेयसे कल्पन्ते, नवा प्रेयसे । एवंविधानां धर्मसंमूढचित्तानां जनानां कृते श्रीमद्भगवद्गीता एव नौकायते । यतोहि एतस्यां समेषामेव शास्त्राणां सारो दरीदृश्यते—

"सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

भारतामृतसर्वस्वं विष्णोर्वक्त्राद् विनिःसृतम् ।
गीतागङ्गोदकं पीत्वा पुनर्जन्म न विद्यते ॥

गीतायां ज्ञानकर्मणोरभूतपूर्वः समन्वयो लोचनगोचरीभवति ।

भगवानुपदिशति—

"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥"

अयमत्राभिप्रायोऽस्ति यदात्मनः स्वरूपज्ञानं ज्ञानमस्ति । प्रायेण जनाः जडत्वात् देहिदेहयोरैक्यं मन्यन्ते । अत एव ते देहदुर्गतौ दूयन्ते । किन्तु यदि वस्तुतो दृश्येत, तर्हि तु आत्मनोऽजत्वममरत्वमपरिवर्त्तनशीलत्वं वा नितरां प्राकाश्यमायाति । दृश्यताम्—

"न जायते म्रियते वा कदाचित्
नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥"

"वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥"

अपि च—

"नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥"

प्रायो वेदान्तिनः कर्मसंन्यासं समुपदिशन्ति । परं तत्रत्यं सारसर्वस्वं सरलशैल्यां तु भगवान् श्रीकृष्ण एव सन्दिशति । यथा हि—

"न कर्मणामनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥"
न केवलन्तावदेतावदेव, अपि तु

श्रीकृष्णमतेन—

"कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥"

सत्यमस्ति यत्कर्मणां संन्यासो नास्ति सुकरः। प्रकृतिः ध्रुवमेव कर्म कारयति—

"नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥"

वस्तुतः, कर्मणां स्वरूपतः परित्यागेन न कोऽपि लाभो भवति। एवं कृते तु लोकसंग्रहोऽपि विनाशमेति। अतः कर्मफलस्य एव त्यागो वरीयान् भवति, न तु कर्मणः। कर्म केवलं कर्त्तव्यबुद्ध्या एव करणीयम्, तत्र फलासक्तिर्नैव विधेया। उक्तमेवास्ति तत्रैव गीतायां भगवता श्रीकृष्णेन—

"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥"

गीतायां स्थितप्रज्ञस्य मनुष्यस्य यानि लक्षणानि कथितानि सन्ति, तानि परमस्पृहणीयानि सन्ति। सुखदुःखयोः, मानापमानयोः, हर्ष-विषादयोः, सम्पद्विपदोः, लाभालाभयोः, जयपराजययोः सत्यं मनो-वृत्तिसाम्यं कियदनुपमेयं वस्तुजातमस्ति, इति नास्ति परोक्षं विप-श्चिताम्। गीतायाः सारल्यपुरस्सरं सारग्राहिणीं प्रयोगयोग्यां च पद्धतिं स्मारं स्मारमेव सर्वे एवेतरे दार्शनिका एनामाद्रियन्ते। न कोऽपि खण्डयति एतदीयं विषयम्। अत एव न केवले भारते, अपितु समस्ते एव संसारे समुपास्यमाना गीता मनुजनुषां कण्ठमालायते। लोकमान्यतिलकेन गीतायाः रहस्यं साधु विदितमासीत्। तेन 'गीतारहस्ये' कर्मयोगस्य गीताभिमतं वास्तविकं स्वरूपं सम्यक् निभालितमस्तीत्यत्र न कश्चित् संशीतिलेशः। कवीन्द्रो रवीन्द्रः, अरविन्दो घोषः, महात्मा गान्धी, आचार्यो 'विनोबाः' अपि गीतारहस्यं चरितार्थीकृतवन्तः सन्ति।

गीतायाः मुख्योपदेशः अकर्मण्यताविनाशाय तथा निष्कामकर्मण्य तास्थापनाय एव मन्तव्यः। कार्यजातं कुर्वता जनेन फलाशा नैव कार्या। एवं सति तत्कृतं कार्यं तत्कार्यं न भूत्वा परमात्मकृतं कार्यं भवति, येन स कर्मभिर्नलिप्यते; न च कर्मफलैर्बध्यते। स तु कैवल्यमेव प्राप्नोति। श्रीमद्भगवद्गीतानुसारेण मोक्षलाभाय गिरिकन्दरा-सेवनमेव आवश्यकं नास्ति, अपितु गार्हस्थ्यमुपसेवमानः स्थितप्रज्ञ-

त्वमाप्नुवन् भगवदर्थं निष्कामानि कर्माणि कुर्वन्नपि मानवो निस्सन्देहं संन्यासिलभ्यं मोक्षमासादयतीत्यत्र मनागपि संशयो नास्ति। उक्तमपि तत्रैव—

"संन्यासः कर्मयोगश्च निश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥"

एवं समासेन सूक्ष्मेक्षिकया विचारिते सति श्रीमद्भगवद्गीतायाः परमोपादेयता अनन्योपासनीयता च सुतरां स्फुटीभवतः। अतो मुमुक्षुभिरपि गृहस्थैः पुरुषैः शास्त्रार्थमात्रबहुलानि विलीनविषयाणि शास्त्रान्तराणि परिहाय सर्वात्मना गीता एव संसेव्या। काश्चनाप्तोक्तयोऽप्यत्र प्रमाणं सन्ति। यथा हि—

"गीता कल्पतरोश्छाया शीतला शुभदा सुखा।
आश्रित्य तां जनाः सर्वे भूयासुः सफलोद्यमाः ॥"
"गीतार्थं ध्यायते नित्यं कृत्वा कर्माणि भूरिशः।
जीवन्मुक्तः स विज्ञेयो देहान्ते परमं पदम् ॥"
"मलनिर्मोचनं पुंसां जलस्नानं दिने दिने।
सकृद् गीताम्भसि स्नानं संसारमलनाशनम् ॥"
"का समस्या समस्तेऽपि संसारे जटिलास्ति या।
समाहिता न गीतायां कृष्णेन परमात्मना ॥"
"नासौ देशो न सा भाषा मतं जातिर्न सा भवेत्।
साक्षरः पुरुषो येन न गीता परिशीलिता ॥"

"एकं शास्त्रं देवकीपुत्रगीतम्" ॥ इत्यलं विस्तरेण विद्वत्सु

# रम्या रामायणी कथा

"सदूषणापि निर्दोषा सखरापि सुकोमला ।
नमस्तस्मै कृता येन रम्या रामायणी कथा ।।"

लौकिककाव्यकलायाः श्रीगणेशो नूनं प्रचेतसो (वरुणस्य) दशमेन पुत्रेण महर्षिणा वाल्मीकिना एव रामायणं नाम रम्यं महत्काव्यं निर्माय विहित आसीदिति विदुषां विदितमेवास्ति । पुरा एकदा मध्याह्नकालिकनैत्यिकक्रियाकलापकरणाय पुण्यसलिलायास्तमसापगायाः तीरमापन्नो महर्षिर्वाल्मीकिर्यदा एकेन व्याधेन तत्र क्रौञ्चयुगलादेकं रतिरतं व्यापाद्यमानं विलोकयामास तथा तद्वियोगे तत्सहचरीक्रियमाणं करुणक्रन्दनं शुश्राव, तदा तदतिकरुणं दृश्यमालोक्य तन्मुखादकस्मादेव छन्दोमयीयं वागुज्जगाम—

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।।"

तदनु सहसा स्फुटितेन महर्षिवाल्मीकेः पद्येनानेन मुदितान्तरात्मा जगत्पितामहस्तत्रैवाविर्भूय महर्षिं प्रशंसन् तमादिकविञ्चोद्घोषयंस्तथा रामचरितवर्णनाय सम्प्रेर्य तिरोबभूव । तदीयामाज्ञां मालामिव शिरसि निधाय महर्षिवाल्मीकिः निर्दोषां सुकोमलां रामनायकां रम्यां यां रामकथां रचयामास, सैवेदानीं रामायणमितिनाम्ना स्वदेशे विदेशे सर्वत्रैव विख्यातास्ति । एतेन सिद्ध्यति यल्लौकिकवाङ्मये महर्षिवाल्मीकिरेवादिमो महाकविरस्ति तथा तत्प्रणीतं रामायणमेव आदिमं महाकाव्यमस्तीत्यत्र पौरस्त्यानां पाश्चात्यानां वा केषाञ्चिदपि विपश्चितां वैमत्यं नास्ति । एतदेवानुभूय कवीन्द्रः क्षेमेन्द्रो निजायां रामायणमञ्जर्यां सादरं व्याजहार यत्—

"स वः पुनातु वाल्मीकेः सूक्तामृतमहोदधिः ।
ओङ्कार इव वर्णानां कवीनां प्रथमो मुनिः ॥"

आदिकविना महर्षिणा वाल्मीकिना स्वीयेऽस्मिन् महाकाव्ये महाकाव्यानुरूपायां रसभावालङ्कारादिविभूषितायां वैदर्भीशैल्यां मानवजीवनस्य सर्वतोमुखी व्याख्या भारतीयसंस्कृतिसभ्यतानुरूपं तथा सविस्तरं विहितास्ति, यथेदं महाकाव्यं सार्ववर्णिकानां शिक्षितानामशिक्षितानाम्, बालानां वृद्धानाम्, स्त्रीणां पुरुषाणां च समस्तानामेव भारतीयानां जनानां कृते सार्वकालिको मनीषिमान्यो मानवधर्मग्रन्थो जातोऽस्तीति विद्वज्जना जानन्त्येव । अतएव च तत्परवर्त्तिभिः जनमनोमर्म्मविद्भिः सजीवसंविद्भिः काव्यविद्याविद्भिः सुमहद्भिः भास-कालिदास-भट्टि-भवभूति-मुरारि-राजशेखर-दिङ्नाग-क्षेमेन्द्र-भोजराज-जयदेवादिभिरनेकैः काव्यकारैः महर्षिवाल्मीकिप्रणीताद् रामायणादेव कथानकांशजातं शैलीलीलाविलासं वा समादाय स्वीयानि स्वीयानि काव्यानि विरचितानि सन्ति । एतेन सचेतसां चेतसि वाल्मीकिविरचितस्य रामायणमहाकाव्यस्य उपजीव्यकाव्यत्वमपि सुतरां सिद्धं जातमस्ति । तस्मात्सत्यमेव शार्ङ्गधरो जगाद—

"कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् ।
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः ॥"

रामायणं नाम रम्यं महाकाव्यमिदं मुनिना वाल्मीकिना चतुर्विंशतिसहस्रसंख्याकैः पद्यैरुपनिबद्धमस्ति । तत्र प्रतिसहस्रं प्रथमं पद्यं क्रमप्राप्तेन प्रत्येकेन गायत्रीमन्त्राक्षरेण प्रारब्धमस्ति । एतेन स्फुटं भवति यन्मुनिमनसि महाकाव्यमिदं गायत्रीमन्त्रवदेव परमपावनतां बिभर्त्ति स्म । तस्मात्सिद्ध्यति यद् यथा वैदिकवाङ्मये गायत्रीमन्त्रो बुद्धिवर्धकः शान्तिदायकश्च विद्यते, तथैव लौकिकसाहित्ये रामायणमपि बुद्धिशोधकं मनश्शान्तिदायकं च वरीवर्त्तीत्यत्र मनागपि न संशयः । तदुक्तमपि—

"रामायणं नाम परं तु काव्यं
सुपुण्यदं वै शृणुत द्विजेन्द्राः ।

यस्मिञ्छ्रुते जन्मजरादिनाशो
भवत्यदोषः स नरोऽच्युतः स्यात् ॥"

आदिमे सत्यपि अस्मिन् महाकाव्ये सर्वविधं बुधमतं साहित्यिकं सौन्दर्यं सहृदयपाठकानां हृदयसंविदं साधु संस्पृशति । भावानां भव्यता, भाषाया विशदता, रसानामास्वाद्यता, अलङ्काराणामाकर्षकता, छन्दसां प्रवाहः, वाग्वैदग्ध्यस्य वैभवं, प्रकृतेश्चित्रणम्, विकृतेश्च वर्णनमित्यादिकं सर्वमेव साहित्यश्रीसंवर्धकं वैशिष्ट्यजातं तत्र दर्शं दर्शं साहित्यशास्त्रसमुपासनालीनमनसां विदुषां पाठकानां मनांसि प्रीयन्ते एव; किन्तु तस्मिन् पितरं प्रति पुत्रस्य कर्त्तव्यम्, भ्रातरं प्रति अनुजस्य कर्त्तव्यम्, पतिं प्रति पत्न्याः कर्त्तव्यम्, स्वामिनं प्रति सेवकस्य कर्त्तव्यम्, मित्रं प्रति मित्रस्य कर्त्तव्यम्, राजानं प्रति अमात्यस्य कर्त्तव्यम्, प्रजाजनान् प्रति राज्ञः कर्त्तव्यं च तत्र यथास्थानं सम्प्राप्य जायमानो विविधकर्त्तव्यावबोधस्तु सर्वप्रकाराणामेव पाठकानां बुद्धिपटलं विशदयतीत्यपि नास्ति केषामपि विदुषामविदितम् । एतेनैव च हेतुना भारतवर्षस्य कोणे कोणे, गेहे गेहे, जने जने च रामायणं प्रति हार्दिको श्रद्धा वरीवृत्यते । एतादृशो जनो न क्वाप्यवलोकयितुं शक्यते योऽनेन महाकाव्येन सुपरिचितो न स्यात् । पितुराज्ञां पुष्पमालामिव शिरसि निधाय प्राज्यं राज्यं विहाय चतुर्दश वर्षाणि सिंह—व्याघ्र—नाग—भल्लूकादिहिंस्रजीवभयङ्करे राक्षसावासघोरे कण्टकाकीर्णे कान्तारे बम्भ्रम्यमाणो रामः, तेन सह पतिसेवासाहचर्य्यादिव्रतं परिपालयन्ती तमनुव्रजन्ती सीता, आत्मनोऽप्यधिकं प्रियं पूज्यं निजाग्रजं रामं प्राणैरपि परिचरन् विस्मृतनवोढो लक्ष्मणः, रामविरहेण परित्यक्तप्राणो राजा दशरथः, रामस्य प्रत्यागमनप्रतीक्षापरायणो रामपादुके एव राज्यश्रियं मन्यमानो राजभवनं विहाय नन्दिग्रामे कृतावासो भरतः, सर्वात्मना ससर्वोत्साहं च रामसेवां विदधानो हनुमान्, पुनश्चान्ते लोकरञ्जनार्थं प्राणेभ्योऽपि गरीयसीं प्रेयसीम् अन्तर्वत्नीं पत्नीं सीतां परित्यजन् राजा रामः सचेतसः कस्य मनो न कर्षति ? महाकाव्यस्य इमानि सर्वाण्येव पात्राणि भारतवर्षस्य आत्मनि सर्वदाकृते लब्धास्पदानि जातानि सन्ति । अतो नूनमेव महाकाव्यमेतद् भारतवर्षे राष्ट्रियमहाकाव्यत्वस्य गरीयांसं

गरिमाणं बिभ्रत्समस्ते एव भारते वर्षे विराजमानं विद्यते तथा आ-प्रलयं सगौरवं विराजिष्यते। मन्ये, मुनिना मनीषिणा वाल्मीकिना स्वीयेनार्षेण नेत्रेण इदमेवावलोक्य समुद्घोषितं स्यात् —

"यावत्स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद् रामायणकथा लोकेषु प्रचरिष्यति॥"

क्रौञ्चीकरुणक्रन्दनाज्जातारम्भे सीतात्यन्तिकवियोगवेदनया च जातावसाने अस्मिन् महामहिमशालिनि महाकाव्ये नूनमेव करुणो रसो मुख्यतया निष्पत्तिं प्राप्तवानस्ति। अन्तरान्तरापि मुनिकुमार—तत्पितृवृद्धान्धमुनि—दशरथ—जटायु—प्रभृतीनां देहत्यागनिरूपकाणि काव्यानुरूपाणि वर्णनानि कारुण्यप्राधान्यात् करुणरसापगामेव परिवर्धयन्तीति सहृदया विदन्त्येव। अतो नूनं करुणरसप्रधानमिदं महाकाव्यं चुम्बकाश्मवत् सचेतसां चेतांसि स्वाभिमुखं समाकर्षति। मन्ये, अत एव मनोवैज्ञानिका अपि मन्यन्ते यत्करुणो रसो यथा सहृदयहृदयं व्याप्नोति तथा नान्यः कोऽपि रसः। प्रतीयते यदेतदेवानुभूय ध्वन्यालोककारेण आनन्दवर्धनाचार्येणापि लिखितमस्ति यत्—

शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः॥

अत्र लोचनाख्यां व्याख्यां प्रकुर्वाणेन श्रीमदभिनवगुप्तपादेन स्पष्टीकृतमस्ति यत्—"सम्भोगश्रृङ्गारान्मधुरतरो विप्रलम्भः, ततोऽपि मधुरतमः करुण इति तदभिव्यञ्जनकौशलं शब्दार्थयोर्मधुरतरत्वं मधुरतमत्वं चेत्यभिप्रायेणाह—श्रृंगार इत्यादि। करुणे चेति चशब्दः क्रममाह। प्रकर्षवदिति। उत्तरोत्तरं तरतमयोगेनेति भावः।"

अरण्यवासित्वान्महर्षिर्वाल्मीकिः अस्मिन् स्वीये महाकाव्ये नभोमेघनदीवनपर्वतादिविविधरूपायाः प्रकृतेः स्वाभाविकं समलङ्कृतं सुरम्यं सुहृद्यमनवद्यं च स्वरूपं पाठकानां पुरस्ताद् उपस्थापितवानस्ति। उदाहरणार्थमत्र कतिपयानि भिन्न भिन्न प्रसंगानि पद्यानि प्रस्तूयन्ते—

(क:) शृङ्गवेरपुरे प्रवहन्तीं गङ्गामुपवर्णयंल्लिखति—

क्वचिद् वेगीकृतजलां क्वचिदावर्तशोभिताम् ॥
क्वचित् स्तिमितगम्भीरां क्वचिद् वेगसमाकुलाम् ।
क्वचिद् गम्भीरनिर्घोषां क्वचिद् भैरवनिःस्वनाम् ॥
देवसंघाप्लुतजलां निर्मलोत्पलसंकुलाम् ।
क्वचिदाभोगपुलिनां क्वचिन्निर्मलवालुकाम् ॥
हंससारससंघुष्टां चक्रवाकोपशोभिताम् ।
सदा मत्तैश्च विहगैरभिपन्नामनिन्दिताम् ॥
क्वचित्तीररुहैर्वृक्षैर्मालाभिरिव शोभिताम् ।
क्वचित्फुल्लोत्पलच्छायां क्वचित्पद्मवनाकुलाम् ॥
क्वचित्कुमुदखण्डैश्च कुड्मलैरुपशोभिताम् ।
नानापुष्परजोध्वस्तां समदामिव च क्वचित् ॥

× × ×

समुद्रमहिषीं गङ्गां सारसक्रौञ्चनादिताम् ।
आससाद महाबाहुः शृङ्गवेरपुरं प्रति ॥"

(ख:) चित्रं चित्रकूटं च इत्थं वर्णयति—

"आदीप्तानिव वैदेहि सर्वतः पुष्पितान् नगान् ।
स्वैः पुष्पैः किंशुकान् पश्य मालिनः शिशिरात्यये ॥
पश्य भल्लातकान् बिल्वान् नरैरनुपसेवितान् ।
फलपुष्पैरवनतान् नूनं शक्ष्याम जीवितुम् ॥
पश्य द्रोणप्रमाणानि लम्बमानानि लक्ष्मण ।
मधूनि मधुकारीभिः सम्भृतानि नगे नगे ॥
एष क्रोशति नत्यूहस्त शिखी प्रतिकूजति ।
रमणीये वनोद्देशे पुष्पसंस्तरसङ्कटे ॥
मातङ्गयूथानुसृतं पक्षिसंघानुनादितम् ।
चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिम् ॥

(ग:) अग्रे पञ्चवटीपरिसरञ्च एवं वर्णयति—

"अयं स कालः सम्प्राप्तः प्रियो यस्ते प्रियंवद ।
अलङ्कृत इवाभाति येन संवत्सरः शुभः ॥

नीहारपरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥

+ + +

सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च साम्प्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥

× × ×

रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥
ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते नच शोभते ॥

× × ×

मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमप्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥
अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
संरक्तः किञ्चिदापाण्डुरातपः शोभते क्षितौ ॥
अवश्यायनिपातेन किञ्चित्प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥
स्पृशन् सुविपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥"

(घः) ततो माल्यवति पर्वते सीतावियोगिराममुखेन वर्षर्त्तुमेवं वर्णयति—

"अयं स कालः सम्प्राप्तः समयोऽद्य जलागमः ।
सम्पश्य त्वं नभो मेघैः संवृतं गिरिसन्निभैः ॥
नवमासधृतं गर्भं भास्करस्य गभस्तिभिः ।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥
सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वपि च पाण्डुभिः ।
स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥

मन्दमारुतनिःश्वासं सन्ध्याचन्दनरञ्जितम् ।
आपाण्डुजलदं भाति कामातुरमिवाम्बरम् ॥
एषा धर्मपरिक्लिष्टा नववारिपरिप्लुता ।
सीतेव शोकसन्तप्ता मही वाष्पं विमुञ्चति ॥

× × ×

कशाभिरिव हैमीभिर्विद्युद्भिरभिताडितम् ।
अन्तःस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥
नीलमेघाश्रिता विद्युत्स्फुरन्ती प्रतिभाति मे ।
स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ॥

× × ×

वहन्ति वर्षन्ति नदन्ति भान्ति
ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः
प्रियाविहीनाः शिखिनः प्लवङ्गमाः ॥"

अथादिकवेरलङ्कारसंनिवेशकौशलप्रदर्शनकामनया किन्तु समयन्यो-न्यमालोक्य केवलस्तदुपमालङ्कारविधानवैभवांशो भवदर्थमुपायनी-विधीयते । पारेसमुद्रं लङ्कायामशोकवाटिकायां सीतामन्विष्यता बल-वता हनुमता विलोकितायाः सीताया वर्णनं कुर्वन्महर्षिर्वाल्मीकिः उपमासुषमां प्रदर्शयति—

"अशोकवनिकायां तु तस्यां वानरपुङ्गवः ॥

× × ×

ततो मलिनसंवीतां राक्षसीभिः समावृताम् ॥
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः ।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ॥
मन्दप्रख्यायमानेन रूपेण रुचिरप्रभाम् ।
पिनद्धां धूमजालेन शिखामिव विभावसोः ॥
पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा ।
सपङ्कामनलङ्कारां विपद्मामिव पद्मिनीम् ॥

पीडितां दुःखसन्तप्तां परिक्षीणां तपस्विनीम् ।
ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ॥
× × ×
प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीगणम् ।
स्वगणेन मृगीं हीनां श्वगणेनावृतामिव ॥
× × ×
सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा ।
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥
भूमौ सुतनुमासीनां नियतामिव तापसीम् ।
निःश्वासबहुलां भीरुं भुजगेन्द्रवधूमिव ॥
शोकजालेन महता विततेन च राजतीम् ।
संसक्तां धूमजालेन शिखामिव विभावसोः ॥
तां स्मृतिमिव संदिग्धामृद्धिं निपतितामिव ।
विहतामिव च श्रद्धामाशां प्रतिहतामिव ॥
सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव ।
अभूतेनापवादेन कीर्तिं निपतितामिव ॥
× × ×
मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम् ।
प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥
तस्य सन्दिदिहे बुद्धिस्तथा सीतां निरीक्ष्य च ।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥
दुःखेन बुबुधे सीतां हनुमाननलङ्कृताम् ।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥'

न केवलं तावदेतावदेव, अपितु मानवजीवनोपयोगिनो मर्मस्पृशो बुद्धिविवर्धनाश्च सामाजिकाः, सांस्कृतिकाः, राजनैतिकाः दार्शनिकाः, धार्मिकाः आर्थिकाश्चानेके जीवनादर्शा अपि वाल्मीकिरामायणे सीता—राम—लक्ष्मण—भरत—हनुमदादीनां सत्पात्राणां चरितचित्रणमाध्यमेन पाठकानां पुरस्तात्प्रस्तुतीकृताः प्राप्यन्ते; यानधीत्य मानवो वास्तवो मानवो भवितुं प्रेरितो भवति । तेषु जीवनादर्शेषु कांश्चिदत्र भवन्मनस्तोषाय समुदाहरामि । यथा—

(कः) रामोदिता जीवनादर्शा इमे—

"सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ।
यस्य किञ्चित्तथाभूतं ननु दैवस्य कर्म तत् ॥"

—अयोध्याकाण्डे २२।२२

"नात्मनः कामकारो हि पुरुषोऽयमनीश्वरः।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ॥
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम्।"

—अयोध्याकाण्डे १०५।१५-१६

सत्यमेवेश्वरो लोके सत्ये धर्मः सदाश्रितः।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥"

—अयोध्याकाण्डे, १०९।१३

"क्षत्रियैर्धार्यते चापो नार्तशब्दो भवेदिति ॥"

अरण्यकाण्डे, १०/३

...... "न ह्यनिष्टोऽनुशास्यते।"

—अरण्यकाण्डे, १०।२१

"ज्येष्ठो भ्राता पिता वापि यश्च विद्यां प्रयच्छति।
त्रयस्ते पितरो ज्ञेया धर्मे च पथि वर्त्तिनः ॥
यवीयानात्मनः पुत्रः शिष्यश्चापि गुणोदितः।
पुत्रवत्ते त्रयश्चिन्त्या धर्मश्चैवात्र कारणम् ॥
सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवङ्गम।
हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभम् ॥'

—किष्किन्धाकाण्डे १८।१३-१५

"दण्ड्ये यः पातयेद् दण्डं दण्ड्यो यश्चापि दण्ड्यते।
कार्यकारणसिद्धार्थावुभौ तौ नावसीदतः ॥

—किष्किन्धाकाण्डे १८।६।१

"नियतिः कारणं लोके नियतिः कर्मसाधनम्।
नियतिः सर्वभूतानां नियोगेष्विह कारणम् ॥
न कर्त्ता कस्यचित्कश्चिन्नियोगे नापि चेश्वरः।
स्वभावे वर्त्तते लोकस्तस्य कालः परायणम्।'

—किष्किन्धाकाण्डे २५।४-५

"न साम्ना शक्यते कीर्त्तिर्न साम्ना शक्यते यशः।"

—युद्धकाण्डे २१।१६

"देशे देशे कलत्राणि देशे देशे च बान्धवाः।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः।

—युद्धकाण्डे १०१।१५

"कीर्त्यर्थं तु समारम्भः सर्वेषां सुमहात्मनाम्॥

—उत्तरकाण्डे ४५।१४

(खः) सीतोदिता जीवनादर्शा इमे सन्ति—

"न पिता नात्मजो वात्मा न माता न सखीजनः।
इह प्रेत्य च नारीणां पतिरेको गतिः सदा॥"

—अयोध्याकाण्डे २७।६

"नातन्त्री वाद्यते वीणा नाचक्रो विद्यते रथः।
नापतिः सुखमेधेत या स्यादपि शतात्मजा॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः।
अमितस्य तु दातारं भर्त्तारं का न पूजयेत्॥

—अयोध्याकाण्डे ३९।२९–३०

"सदृशाच्चापकृष्टाच्च लोके कन्यापिता जनात्।
प्रधर्षणमवाप्नोति शक्रेणापि समो भुवि॥"

—अयोध्याकाण्डे ११८।३५

"धर्मादर्थः प्रभवति धर्मात्प्रभवते सुखम्।
धर्मेण लभते सर्वं धर्मसारमिदं जगत्॥

—अरण्यकाण्डे ९।३०

"नतु सद्योऽविनीतस्य दृश्यते कर्मणः फलम्।
कालोऽप्यङ्गीभवत्यत्र सस्यानामिव पक्तये।"

—अरण्यकाण्डे ४९।२७

"यदा विनाशो भूतानां दृश्यते कालचोदितः।
तदा कार्ये प्रमाद्यन्ति नराः कालवशं गताः॥

—अरण्यकाण्डे—५६।१६

"अतुष्टं स्वेषु दारेषु चपलं चपलेन्द्रियम्।
नयन्ति निकृतिप्रज्ञं परदाराः पराभवम्॥
—सुन्दरकाण्डे २१।८

"कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दो नरं वर्षशतादपि॥
—सुन्दरकाण्डे ३०।६

(ग:) अथ लक्ष्मणोदिता जीवनादर्शाः प्रस्तूयन्ते—

"वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि।
स्वभावस्त्वेष नारीणामेषु लोकेषु दृश्यते॥
—अरण्यकाण्डे ४५।२६

"उत्साहो बलवानार्य नास्त्युत्साहात्परं बलम्।
सोत्साहस्य हि लोकेषु न किञ्चिदपि दुर्लभम्॥
—किष्किन्धाकाण्डे १।१२१

अर्थेन हि विमुक्तस्य पुरुषस्याल्पचेतसः।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा॥
—युद्धकाण्डे ८३।३३

"यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान्।
यस्यार्थाः स महाभागो यस्यार्थाः स गुणाधिकः॥"
—युद्धकाण्डे ८३।३६

"नहि प्रतिज्ञां कुर्वन्ति वितथां सत्यवादिनः।
लक्षणं हि महत्त्वस्य प्रतिज्ञापरिपालनम्॥
युद्धकाण्डे १०१।५२

(घ:) अथ भरतोदिता जीवनादर्शाः प्रदर्श्यन्ते—

"न मे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयाम्।
यदि रामस्य नावेक्षा त्वयि स्यान्मातृवत्सदा॥"
—अयोध्याकाण्डे ७३।१८

"पितुर्हि समतिक्रान्तं पुत्रो यः साधु मन्यते ।
तदपत्यं मतं लोके विपरीतमतोऽन्यथा ॥"
—अयोध्याकाण्डे १०६।१५

(ङः) हनुमदुदिता जीवनादर्शास्तु इमे सन्ति—

"गुणदोषकृतं जन्तुः स्वकर्म फलहेतुकम् ।
अव्यग्रस्तदवाप्नोति सर्वं प्रेत्य शुभाशुभम् ॥"
—किष्किन्धाकाण्डे २१।२

"यो हि मित्रेषु कालज्ञः सततं साधु वर्त्तते ।
तस्य राज्यं च कीर्त्तिश्च प्रतापश्चापि वर्धते ॥
—किष्किन्धाकाण्डे २९।१० उत्त० ११ पूर्व०

"विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम् ॥
—सुन्दरकाण्डे १३।४७ पूर्व०

"असत्यानि च कृत्यानि संशयो मे न रोचते ।
कश्च निःसंशयं कार्यं कुर्यात्प्राज्ञः ससंशयम् ॥"
—सुन्दरकाण्डे ३०।३५

"न साम रक्षःसु गुणाय कल्पते
न दानमर्थोपचितेषु युज्यते ।
न भेदसाध्या बलदर्पिता जनाः
पराक्रमस्त्वेष ममेह रोचते ॥"
—सुन्दरकाण्डे ४१।३

"वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥"
—सुन्दरकाण्डे, ५५/५

(चः) सुग्रीवोदितास्तु—

"बालिशस्तु नरो नित्यं वैक्लव्यं योऽनुवर्तते ।
स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले ॥"
—किष्किन्धाकाण्डे ७।१०

"सर्वथा सुकरं मित्रं दुष्करं प्रतिपालनम्।
अनित्यत्वात् तु चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥"

—किष्किन्धाकाण्डे ३२।७

**उपसंहारः**

इत्थमहं पश्यामि यद् वाल्मीकिकृतं रामायणं नाम रम्यं रामीयं महाकाव्यमिदं वस्तुत एव एकं सर्वाङ्गीणं,सर्वजनीनं सर्वविधजातीयजनमनोरमणं सर्वजनकण्ठहारायमाणं सहृदयहृदयाराध्यमानं भारतीयसाहित्यस्य च उद्याने पारिजातायमानम्, मन्दिरे देवतायमानम्, गगने दिने दिनेशायमानं निशि च परिपूर्णतारानायकायमानम्, पुष्पपटले पाटलायमानम् रत्ननिचये च कौस्तुभायमानं महनीयं मानवीयं जीवनकाव्यमस्ति । अतो हेतोः एतत्प्रणेतुर्महर्षेर्वाल्मीकेर्यावती प्रशंसा विधीयेत, तावती मन्मनसि तु न्यूना एव प्रतिभाति । इत्थमेव चाभिरूपा अपि अभिप्रयन्ति—

"वाल्मीकिगिरिसम्भूता रामाम्भोनिधिसंगता।
श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम् ॥"

अपि च—

कूजन्तं राम रामेति मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥"

इत्थमिदं सर्वं दर्शं दर्शं वक्तुमीहमानमस्ति मामकं मनो यत् नलचम्पूकारस्य त्रिविक्रमभट्टस्य 'रम्या रामायणी कथा' इति कथनं सर्वथैव समीचीनमस्तीति दिक् ।

## भारतीया संस्कृतिः

'संस्क्रियते आत्मा यया सा संस्कृतिः' इति लौकिके विग्रहे विहिते सति 'सम्' उपसर्गपूर्वकात् करणार्थकात् 'डुकृञ्' धातोः स्त्रियां क्तिनि प्रत्यये जाते सति संस्कृतिशब्दो निष्पत्तिपथमायाति। एवं-विधे विमर्शे सति समेषामेव शेमुषीजुषां विदुषाम् अतिरोहितं भवति संस्कृतेः किमपि वाचामनिर्वचनीयं परममहनीयं महत्त्वम्।

वस्तुतः संस्कृतिरेव काम-क्रोध-लोभ-मोह-मद-मात्सर्यादीनि नानाविधानि मानवारातिरूपाणि मनान्यपाकृत्य आत्मानं निष्कल्मषं विधाय मानवान् भृशं समुपकरोति। परन्तु साम्प्रतं नयनपथं श्रवणपथं वा समागच्छन्तीष्वनेकासु विभिन्नदेशीयासु संस्कृतिषु इयं विशेषता लब्धुं नैव शक्यते। अस्ति खलु एका भारतीया एव संस्कृतिः, यस्यां विश्वजनीनाः सर्वे धर्माः आदिकालादेव परिस्फुरन्तो दरीदृश्यन्ते। भारतीया एव संस्कृतिः हृदयगताज्ञानान्धकारविशसने प्रवृत्ता सती कार्याकार्यविवेकं शिक्षयति। अन्यास्तु एकदेशीयस्वार्थसम्पूर्त्तिसम्प्रे-रिका भूत्वा इतरेषां शोषणमेव समुपदिशन्ति। अनेनैव हेतुना आस्माकीना भारतीया संस्कृतिः सुचिरात् स्वकीयं ध्वजं समन्ताद् दिग्दिगन्तेषु समुच्छ्रितं विदधती तत्तद्देशोत्पन्नेषु सम्पन्नेषु विपन्नेषु च मानवेषु निजामसाधारणां स्पृहणीयतां रमणीयतां ग्रहणीयतां च संस्थापयन्ती सती सुतरां राजमाना समेषामेव इतिहासजुषां विदुषां श्रुतिनयनाध्वगीना वोभवीति। यद्यपि एतस्यामतिद्राघिष्ठायां यात्रायां भारतीया संस्कृतिः अन्यदेशीयाभिः संस्कृतिम्मन्याभिरनेकाभिः संस्कृतिभिः भृशमाक्रान्ता भूतवती अस्ति, तथापीयं वह्निज्वालामाला-भिरालोडिता काञ्चनी मूर्त्तिरिव समुज्ज्वलैव समभूदित्यहो धैर्यधारि धौरेयताललामभूतायाः भारतीयसंस्कृतेः कश्चिद् विलक्षण एव वाचामनाचमनीयोऽशेषविशेषो विशेषः।

अथात्र प्रतीकरूपेण भारतीयसंस्कृतेः कतिपया विशिष्टताः समुदाह्रियन्ते । यथाहि—

१. पुरुषार्थचतुष्टयसाधना
२. वर्णाश्रमव्यवस्था
३. आध्यात्मिकताप्राधान्यम्
४. पुनर्जन्मप्रत्ययः
५. आस्तिकता
६. मातापितृगुरुजनादरः
७. यज्ञेषु परमादरः
८. अतिथिस्नेहः
९. प्राणिदया
१०. परोपकारपरायणता
११. त्यागभावना
१२. निष्कामकर्मयोगः
१३. सदाचारपरिपालनम्
१४. सहिष्णुता
१५. प्रभविष्णुता
१६. विश्वमङ्गलकामना

अथासां विशिष्टतानां समासेनात्र महिमापि प्रस्तूयते । यथा हि—

**पुरुषार्थचतुष्टयसाधना**

भारतीयसंस्कृतौ धर्मार्थकाममोक्षसंज्ञकस्य पुरुषार्थचतुष्टयस्य गरिष्ठं वरिष्ठं महिष्ठं च महत्त्वमनुभूयते । भा-रते भारते वर्षे धर्म एवाशेषमूलं मन्यते । धर्मोऽयं मानवीयधारणापरको विद्यते, नतु संकुत्सितसम्प्रदायानलसन्तापदग्धो दग्धविदग्धो विशिष्टसम्प्रदाया-त्मश्लाघापरकफलकः । अत्राह महामतिर्भर्तृहरिः—

"आहारनिद्राभयमैथुनानि
समानमेतत्पशुभिर्नराणाम् ।
धर्मो हि तेषामधिको विशेषो
धर्मेण हीनाः पशुभिः समानाः ॥"

महामना मनुमनुते—

"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥"

अस्मदीया भारतीया संस्कृतिरस्मात् शिक्षयति यद् धर्मोपार्जित एवार्थः, धर्माविरुद्धश्चैव कामो मोक्षहेतू भवतः; नतु इतरथा ।

**वर्णाश्रमव्यवस्था**

भारतीयसंस्कृतौ सर्वे मनुष्याः उच्चावचभेदराहित्येन कर्मानुसारं ब्राह्मण-क्षत्रिय-वैश्य-शूद्राभिधेयेषु चतुर्षु वर्णेषु तथा ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्याससञ्ज्ञकेषु चतुर्षु आश्रमेषु विभज्यन्ते । तेषु तेषु वर्णेषु, तेषु तेषु आश्रमेषु च निवसन्तो मानवाः स्वकीयानि स्वकीयानि कार्याणि कुर्वन्तो 'मया किं विधेयम्' ? 'कदा किं विधेयम्' ? इत्यादिरूपचिन्तापिशाचीपाशबद्धा नैव भवन्ति । श्रीमद्भगवद्गीतायां परमयोगिराजेन श्रीकृष्णेन प्रतिवर्णं यः कर्मोपदेशो दत्तोऽस्ति, स केषामपि गीताजुषाम् अविदितो नास्ति ।

**आध्यात्मिकताप्राधान्यम्**

भारतीयसंस्कृतेरियं हृद्यानवद्यास्ति परमा विशेषता, यदत्र भौतिकप्रपञ्चपाशोपेक्षापूर्वकम् आध्यात्मिकी सम्पत्तिः प्राप्तुमिष्यते । कामक्रोधलोभमोहादिवासनापूरपूरितं परिदृश्यमानं जगदेव सार्वकालिकं लक्ष्यं नास्ति । अपितु येन केनापि विलक्षणेन सुलक्षणेन क्षणेनैव सच्चिदानन्दघनरूपेण निखिलमिदं ब्रह्माण्डं परिव्याप्तमस्ति, यस्यैव भासा सर्वमिदं विभाति, तस्य कस्यचिद् वाचामनिर्वचनीयस्य महामहनीयस्य परमतत्त्वस्य साक्षात्कार एव चरमोद्देश्यमस्ति भारतीयानाम् । एतदर्थमेव निखिलं दर्शनवाङ्मयमपि प्राकाश्यमानीतमस्ति ।

**आस्तिकता पुनर्जन्मप्रत्ययश्च**

आस्तिकता पुनर्जन्मप्रत्ययश्चेत्युभौ गुणावन्योन्याश्रितौ स्तः । अस्ति, परो लोकः' इति भारतीयानां मतिः सुतरां सर्वैर्विदिता

एवास्ति । अत एव भारतीयानां मानवानां मनसि पुनर्जन्मविश्वासोऽपि वरीवृत्यते । ते मन्यन्ते यत्—

"जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥"
"अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥"

अपि च—
'अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ।"

**मातापितृगुरुजनादरः**

'मातृदेवो भव'-'पितृदेवो भव'-'आचार्यदेवो भव'-'गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥'-'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी'-'कुपुत्रो जायेत क्वचिदपि कुमाता न भवति'-इत्यादीनि उपदेशवाक्यानि तथा परशुरामस्य मातापितृभक्तिः, रामस्य पितृभक्तिः, कौत्स-एकलव्य-सत्यकाम-जाबालादीनां च गुरुभक्तिरिदं तथ्यं पुष्णन्ति यद् भारतीयसंस्कृतौ मातापितृगुरुजनानां कृते भूयानादरो वर्तते ।

**यज्ञेषु परमादरः**

"अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥"

"यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥"

"यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥"

इत्यादिभिर्वाक्यैः यज्ञमहिमा सुतरां स्फुटति । भारतीयसंस्कृतौ ब्रह्मयज्ञ-देवयज्ञ-पितृयज्ञ-बलिवैश्वदेवयज्ञ-अतिथियज्ञ संज्ञकानां पञ्चानां यज्ञानां दैनिकं विधानमुपदिष्टमस्ति । ईदृशी लौकिकी पारलौकिकी च कल्याणकामना अन्यत्र कुत्रापि नैवावलोक्यते ।

### अतिथिस्नेहः प्राणिदया च

भारतीयानामातिथेयता विश्वविश्रुतास्ति। यथाहि भारतीय-संस्कृतौ 'अतिथिदेवो भव'-'सर्वदेवमयोऽतिथिः'-'अरावप्युचितं कार्यम् आतिथ्यं गृहमागते'-इत्यादयो महोदाराः मानवीयाः राद्धान्ताः समुपलभ्यन्ते; ते चात्र सर्वमान्या अपि सन्ति। विषयेऽस्मिन् रघु-कौत्सकथा, कपोतव्याधकथा, कृष्णार्जुनमोरध्वजकथाच केषां नोप-देशाय कल्पन्ते ? एवमेव 'अहिंसा परमो धर्मः'– 'को धर्मः ? भूतदया, 'मा हिंस्यात् सर्वभूतानि'—इत्यादयः सूक्तिमुक्ताः अपि भारतीयानां जनानां कृते ग्रैवेयकायन्ते।

### परोपकारपरायणता

इयं विशेषता तु भारतीयसस्कृतौ भृशमोतप्रोता सती सन्ति-ष्ठते। 'परेषामुपकारस्तु स्वप्राणदानेनापि विधेयः' इत्येवंरूपो महोप-देशस्तु भारतवर्षस्य गरिष्ठा विशिष्टतास्ति। अत्रत्येतिवृत्ते परार्थं प्राणानुत्सृजतां जनानामनेकानि आख्यानकानि समुपलभ्यन्ते। अत्रत्या तु प्रकृतिरपि परोपकारपरायणा सती दिवानिशं भद्रं वितन्वाना दरीदृश्यते—

"परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः।
परोपकाराय विभाति सूर्यः परोपकारार्थमिदं शरीरम्॥"

अपि च—

"अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम्॥"

### त्यागभावना

यावत्कालं मानवस्त्यागभावभूमिं नारोहति, तावत्कालं तस्य आध्यात्मिकाभ्युदयो नैव सुलभः। अस्मदीया भारतीया संस्कृतिः अनेनैव हेतुना त्यागमुपदिशति। भोगस्तु पाश्चात्त्यसंस्कृतेः केन्द्र-बिन्दुः। अत्र हि 'योगः कर्मसु कौशलम्'—'तस्माद् योगी भवार्जुन' 'दरिद्रान् भर कौन्तेय'—'तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद् धनम्—'दानेन पाणिर्नतु कङ्कणेन'-- इत्येवंविधानि सद्वचांसि

मानवानां मनांसि त्यागार्थं सततं प्रेरयन्ति । हरिश्चन्द्र-शिबि-दधीचि-कर्णादीनां भारतीयनरपतीनां त्यागाख्यानकानि केषां नैव विदितानि सन्ति ?

**निष्कामकर्मयोगः**

कर्मयोगस्तु प्रायेण सर्वत्र सुलभोऽस्ति, किन्तु निष्कामकर्मयोगोपदेशस्तु भारतीयाया एव संस्कृतेर्विशेषः । वस्तुतः सकामानि कर्माणि मानवस्य बन्धनमेव कारयन्ति; मोक्षस्तु निष्कामान्येव प्रसुवते । यथाह भगवान् कर्मोपदेष्टा हरिः—

"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।।
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ।।"

सदाचारपरिपालनम्

भारतीयसंस्कृतौ सदाचारं निमित्तीकृत्य ध्मायमानो महाशङ्खनिर्घोषो महतीं रम्यतां स्फुटविषयतामुपादेयताञ्च वितन्वानोऽस्ति । अस्मिन् प्रसंगे श्रीनरहरिनाथशास्त्रिणा समीचीनमेव समीरितमस्ति—

"आचारः सर्वधर्माणां मूर्धानमधिरोहति ।
यथा दध्नः समुद्भूतं नवनीतं न मज्जति ।।
सदाचाराद् यशो लोके सदाचारात्सुखं दिवि ।
सदाचाराद् भवेन्मोक्षः सदाचारो हि कामधुक् ।
सदाचारमयीं नावं समारुह्य सुबुद्धयः ।
पारं याता भवाम्भोधेर्भूयो भीतिं न भेजिरे ।।

सहिष्णुता प्रभविष्णुता च

अत्रत्या इतिहासविदो विदन्ति यद् आस्माकीनायां भारतीयसंस्कृतौ वैदेशिकैराक्रामकैः भूयो भूयः प्रहाराः कृताः सन्ति एतद्विनाशाय । किन्तु तानशेषानात्मजानिव वैदेशिकानपि सहमानेयम् अन्ततो गत्वा तान् सर्वानपि आत्मसात्कृतवती अस्तीत्यहो परमोदारता परमसहिष्णुता परमप्रभविष्णुता चैतस्याः ?

**विश्वमङ्गलकामना**

भारतीया संस्कृतिः न कदाचिदपि कस्यैचिदपि अन्यदेशीय-संस्कृत्यै ईर्ष्यति, असूयति क्रुध्यति वा। इयं महता स्नेहेन समुपदिशति यत्—

संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।"
"......मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।
मित्रस्य चक्षुषा समीक्षामहे॥"
"सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥"
"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥"
"सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु॥"

वस्तुतस्तु 'जीव जीवय'-'हस हासय'-'रमस्व रमय'-इत्याकारको विश्वमङ्गलात्मकः सिद्धान्त एव भारतीयसंस्कृतेर्जीवितं प्रतिभाति।

इदमत्र परमावश्यकरूपेण समुल्लेखनीयं विद्यते यद् उपरिपरिसंख्यातातिरिक्ताः कृतज्ञता-निरभिमानिता-स्वाभिमानिता-भाग्यवादिता-कर्मकाण्डप्रियता-अवतारवादिता-तीर्थावलोकनप्रियताप्रभृतयोऽनेका अन्या अपि असामान्या विशिष्टताः सन्ति भारतीयसंस्कृतौ। किन्त्वासां सर्वासां विश्लेषणम् अल्पाकारबन्धे अस्मिन् निबन्धे नैव सम्भवति। अतस्तदर्थमत्र नैव यते। किन्तु भारतीयसंस्कृतेः एवंविधान् विविधान् गुणगणाननुभूय मया (एतन्निबन्धलेखकेन डॉक्टर हरिनारायणदीक्षितेन) केचित् श्लोकाः अपि विरचिताः सन्ति, तानत्र भवन्निर्मलनयनयुगलयोः पुरस्तादुपायनीविधाय निबन्ध-विस्तरादहं विरमामि। यथा हि—

अवनतिं हि गता पुनरुन्नतिं
समयचक्रवशात् परिवर्तिता।
विविधरूपधरा भवशिक्षिका
समभवन्मम भारतसंस्कृतिः॥ १॥

धृतिपवित्रविचारविभूषिता
सकलविश्वहिते सततं रता ।
विमलशीलदयार्जवपालिका
भरतदेशविशेषसुसंस्कृतिः ॥ २ ॥

इह परत्र च मङ्गलकामनां
विदधती मम भारतसंस्कृतिः ।
निजसुनीतिपथप्रथने रता
निखिलविश्वतले सुविराजते ॥ ३ ॥

परनिपीडनपापनिवारिणी
शरणयाचकलोकसुपालिनी ।
श्रुतिविगीतविधेः परिरक्षिणी
जयतु मे भरतावनिसंस्कृतिः ॥ ४ ॥

एतद् गुणास्सन्ति सुशीलवत्ता
विपत्तिकालेऽप्यतिधैर्यवत्ता ।
श्रद्धा महत्सु प्रणयः समेषु
शुभाभिलाषो नवजीवनेषु ॥ ५ ॥

यामाश्रिता वीतभया मनुष्या
गता ह्यनेके स्तुतिभाजनत्वम् ।
एतादृशीं भारतसंस्कृतिं को
वक्तुं समर्थो भुवि भासमानाम् ॥ ६ ॥

# संस्कृतभाषा

## [तस्या महत्त्वं स्थितिः प्रचारोपायाश्च]

**महत्त्वम्**

न केवलस्यास्य कैवल्यप्रधानस्य भा-रतस्य भारतवर्षस्यैव, अपितु विश्वस्य प्रतिकोणं निवसत्सु, अनारतं साहित्यपाथोनिधिं मथ्नत्सु, संसारस्य किन्तां कियत्तां कीदृशताञ्चालोचयत्सु विपश्चित्सु नास्ति कश्चिदपीदृशो यो व्याकरण-शिक्षा-कल्प-निरुक्त-ज्यौतिष-छन्दोऽभिधेयषडङ्गोपबृंहितपरमपूतवेदराशिविभूषितायाः, महर्षि-वाल्मीकि - वेदव्यासप्रणीतपरमोज्ज्वलग्रन्थरत्नकान्तिराजितायाः, कविकुलकमलदिवाकरमहाकविकालिदासविरचिताभिज्ञानशाकुन्तला-दिविश्वविख्यातकाव्यकुसुमपरिमलपूरपूरितायाः, काव्यकानन-पञ्चाननश्रीवाणभट्टनिर्मितकादम्बरीमदमत्तकलेवरायाः, पीयूष-वर्षि श्रीजयदेवगीतगीतगोविन्दगीतसुधासीकरसिक्तायाः, रसराज-शृङ्गारवीरादिविविधरसमाधुरीमधुरायाः, ओज प्रसादमाधुर्यादि-गुणगणमण्डितायाः, लाटीवैदर्भीगौडीपाञ्चालीत्याख्यचतुर्मुख-रीतिचतुष्टयचातुरीचर्चितायाः, उपमारूपकादिविविधालङ्कारस-मलङ्कृतायाः, सुसंस्कृतायाः संस्कृतभाषायाः चारुणा गरिम्णा, पृथुना महिम्ना, पटुना च म्रदिम्ना अधुनापि चेतसि चारु न चमत्क्रि-येत ।

अस्मिन् प्रतिक्षणं विलक्षणगतिमति जगति आसीत्कश्चित् सुलक्षणः सोऽपि सुरभारतीक्षणः, यस्मिन्नासीदन्नेलद्विचक्षणाः विद्वच्चरणाः । आबालवृद्धम् आराजरङ्कं साम्राज्यमासीत्सुरभा-रत्याः । विक्रमादित्यहर्षवर्धनभोजराजादीनां संस्कृतस्नेहभाजां भूभुजामनारतं सप्रश्रयमाश्रयं समवाप्य तत्तत्कालिकैः सुरभारती-समुपासकैः कवित्वधारिधौरेयैः शारदेयैरियमस्मदीया संस्कृतभाषा

विविधाभिः वाङ्मयविधाभिः समुपबृंहिता रमणीयतां स्पृहणीयता-मादरणीयतां च प्रापिता सती भृशमपोषि।

वस्तुतो नीरक्षीरविवेकेन विचारे विहिते सति संस्कृतभाषायां विश्वस्य सर्वस्वमेव दरीदृश्यते। 'अर्थे धर्मे च कामे च मोक्षे च भरतर्षभ। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्'—इत्यादि-वचोविख्यातमहामहिमशालिने वैयासिकाय महाभारताय, 'सदूषणापि निर्दोषा सखरापि सुकोमला। नमस्तस्मै कृता येन रम्या रामायणी कथा'—इत्याख्यातगौरवाय वाल्मीकिरामायणाय, 'काव्येषु नाटकं रम्यं तत्र रम्यं शकुन्तलम्। तत्रापि चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम्॥ यास्यत्यद्येति तत्रापि श्लोकः सर्वमनोहरः'। 'वासन्तं कुसुमं फलं च युगपद् ग्रीष्मस्य सर्वं च यद्, यच्चान्यन्मनसो रसायनमतः सन्तर्पणं मोहनम्। एकीभूतमभूतपूर्वमथवा स्वर्लोकभूलोकयोः, ऐश्वर्यं यदि वाञ्छसि प्रिय सखे शाकुन्तलं सेव्यताम्॥'—इत्येवंविधविश्व-विश्रुताय कालिदासीयाभिज्ञानशाकुन्तलाय, 'भारवेरर्थगौरवम्' इत्यर्थगाम्भीर्यगुरुभारविविरचितकिरातार्जुनीयनामकमहाकाव्याय, 'माघे सन्ति त्रयो गुणाः' इति पदलालित्योपमार्थगौरवाख्यगुणत्रयो-पेतमाघाभिहिताय माघकाव्याय, 'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्' इत्युक्तिपाषाणशिलाश्रुमोचनक्षमाय भवभूतिकरुणाकराय उत्तररामचरिताय, 'कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चि-दपि चेतयते जनोऽयम्'। 'कादम्बरीरसज्ञानामाहारोऽपि न रोचते।' 'रुचिरस्वरवर्णप्रदा रसभाववती जगन्मनो हरति। सा किं तरुणी? नहि नहि वाणी बाणस्य मधुरशीलस्य॥'—इत्याद्यनेकप्रशस्तितति-भाजो बाणभट्टस्य कादम्बर्यै, 'यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलम्। मधुरकोमलकान्तपदावलीं शृणु तदा जयदेवसरस्वतीम्॥'—इत्यादिरीतिविख्यातगीतगोविन्दाय च को नाम साहित्यानुशीलनसञ्जातावदातचेताः सुचेता विनेता अध्येता वा नैव स्पृहयेत्? अहं तु मन्ये सर्वे एव स्पृहयिष्यन्ति।

न केवलन्तावदेतावदेव, अपितु वैदिकवाङ्मयस्य औपनिषदानां निर्भ्रान्तानां सिद्धान्तानां सर्वतन्त्रस्वतन्त्रा सार्वकालिकी च प्रभ-विष्णुतापि नास्ति केषामपि धीजुषां विश्वविदुषां चक्षुषामगोचरा।

एतस्मादेव हेतोस्तु श्रीमद्भगवद्गीता समेषामेव तत्त्वबुभुत्सूनां विश्वमानवानां ग्रैवेयकायमाणा बोभूयते। पुरुषार्थ-चतुष्टयपद्धति-परमानन्दप्राप्ति-परोपकारपरायणता-वदान्यता- सहिष्णुता-आतिथेयता-विश्वमङ्गलकामना-राष्ट्रियभावना-अन्ताराष्ट्रियभावनासत्याभिनिवेशसदाचार-निष्कामकर्मयोग-गुरुजनादर यमनियमादयो विपुला विविधा विशिष्टाः सार्वभौमा मानवधर्मा यावता बाहुल्येन अस्यामास्माकीनायां संस्कृत-भाषायां लोचनातिथीभवन्ति, तावता बाहुल्येन नेतरस्यां कस्यामपि विश्वभाषायां सन्तीत्यत्र न मनागपि शङ्कापङ्ककलङ्कलेशः। एवमेव 'सत्यान्न प्रमदितव्यम्'-'धर्मान्न प्रमदितव्यम्'-'परोपकाराय सतां विभूतयः'-'मा हिंस्यात् सर्वभूतानि' -'अहिंसा परमो धर्मः'-'दानेन पाणिर्नतु कङ्कणेन'-'आचारहीनं न पुनन्ति वेदाः'-'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी'-'तमसो मा ज्योतिर्गमय'-'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन'-'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्॥'-'त्याज्यं न धैर्यं विधुरेऽपि काले'-इत्यादीनां बहूनां सूक्तिमणीनां मनोरमणीयता परमस्पृहणीयता ग्रहणीयता वा न कथञ्चिदपि केनचिदपि व्यवधानेन वारयितुं शक्येत्यहो सनातनत्वं सुरभारतीसूक्तिमुक्तानाम्? अतएव तु 'संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः'-इति विश्वासो जनेषु जागर्ति।

**साम्प्रतिकी स्थितिः**

किन्तु हा हन्त! यास्माकीना संस्कृतभाषा तथाविधानिर्वचनीय-गुणगणगरिष्ठा, महिष्ठा, सदा सर्वैः समाद्रियमाणा, भाष्यमाणा, लिख्यमाना, श्रूयमाणा, परिवर्ध्यमाना च सर्वत्र समदृश्यत; यस्यां च भाषायां 'काव्यं करोमि नहि चारुतरं करोमि, यत्नात्करोमि यदि चारुतरं करोमि। भूपाल-मौलिमणिमण्डितपाद-पीठ, हे साहसाङ्क कवयामि वयामि यामि॥" इति कुविन्दाः, 'भारं न बाधते राजन् बाधतिर्बाधते यथा।' इति काष्ठविक्रेतारः, 'जगद् ध्रुवं स्यादध्रुवं जगत्स्यात् कीराङ्गना यत्र गिरो गिरन्ति। द्वारस्थनीडान्तरसन्निविष्टा जानीहि तन्मण्डनमिश्रधाम॥'-इतिमण्डनमिश्र-गेहवर्तिनः शुकसारिकादयो विहङ्गमा अपि वार्तालापमकार्षुः, तस्या

एव देवभाषायाः संस्कृतभाषायाः सम्प्रति शोचनीयां दशां दर्शं दर्शं मम तु चेतश्चेखिद्यते, देहो दन्दह्यते, आत्मा च रोरुद्यते । यतो हि अद्यैनाममरभारतीं न कोऽपि समाद्रियते; न कोऽपि पिपठिषति; न कोऽपि लिलिखिषति; न कोऽपि च विवक्षति । सर्वे एवाद्य आङ्ग्ला रमणीकटाक्षक्रीतदासा इव वरीवृत्यन्ते यतस्ते तामेवाद्रियन्ते; तामेव पठन्ति; तामेव लिखन्ति; तामेव रसनाग्रीकुर्वन्ति; तामेव मनोमन्दिरे स्थापयन्ति; तामेव च समस्तेऽपि राजकार्यकलापव्यवहारे संयोजयन्ति; अर्थात् सर्वतोभावेन तामेव सम्पुष्णन्ति । देवभाषान्तु ते 'मृताम्' मत्वा काणेनापि चक्षुषा न विलोकयन्तीत्यहो प्रमादो भारतीयजनानाम् ?

यद्यपि काशी-कश्मीर-कर्णपुर-प्रयाग-पुण्यपत्तन-दिल्ली-दरभङ्गा-दिषु कतिपयेषु नगरेषु संस्कृतविश्वविद्यालय-विद्यापीठ-महाविद्यालय-विद्यालयादयः काश्चन संस्कृतशिक्षणसंस्थाः लोचनपथमवतरन्ति; अन्येष्वपि च विरलेषु नगरेषु यत्र तत्र विरलविरलाः विकलाः संस्कृतपाठशालाः नयनातिथीभवन्ति; किन्तु तत्र तत्र सर्वत्रैव छात्राणां वैरल्यम्, अध्यापकानां दैन्यमिश्रितमौदासीन्यम्, भवनानां वैरूप्यम्, शिक्षासाधनानाञ्च न्यौन्यं कस्य नाम सचेतसः सुमेधसो विदुषो विषादाय नालम् ? ये च केचन भारतीयसंस्कृतिसभ्यतानुरागरक्तचित्ता धर्मवित्ता जनाः स्वात्मभूतानात्मजान् संस्कृतभाषां पाठयन्त्यपि, तर्हि तेषान्ते मनोरथशतैः पालिताः पाठिताः प्रियतमाः पुत्रा आधुनिकेऽस्मिन् समाजे न क्वाप्यादरं लभन्ते; नवा दुरन्तपूरोदरदरीपूरणाय श्रेयसीम् अपेक्षितार्थकरीञ्च भृतिं प्राप्नुवन्ति । सर्वत्रैव ते सुरभारतीजुषो विद्वांसो भूत्वापि आङ्ग्लभाषासेविनां शिक्षितम्मन्यानां नराणां ललाटम्पश्या भवन्तो देववाणीदुर्दशामेव द्योतयन्ति । अनेन कारणेन न केवलं तदितरे जनाः, अपितु तेऽपि पुनः स्वहृदयभूतान् प्रियपुत्रान् विस्मृत्यापि संस्कृतं नैव पाठयन्ति ।

अद्य संस्कृतभाषायाश्चिरन्तनं स्रोतः, येन कदाचित् दिशो-दिगन्ताश्च हरीतिमानमापुः, जीवनं च लेभिरे. शोषमुपगच्छदस्ति । नाद्य संस्कृतसाहित्यप्रणयनपरम्परा दृश्यते; न वाद्य शास्त्रार्थसंरम्भः श्रूयते; नवा संस्कृतकविताकामिनीकमनीयकान्तिपूरा विलोक्यन्ते;

नवा चाद्य कालिदासजयदेवादीनां कवीनां सरसाः मधुराः भावगभीराः श्लोका एव गीयन्ते। यद्य तु पाश्चात्यभाषाभूषाभावनाभिव्यक्तीनामेव यत्र तत्र सर्वत्रैव अवार्यप्रसरं साम्राज्यं दरीदृश्यते।

संस्कृतभाषायाः इमां पूर्वोक्तां महत्तामवस्थाञ्चालोकमालोकं मया (एतन्निबन्धलेखकेन डॉक्टरहरिनारायणदीक्षितेन) कतिपयानि पद्यानि विरचितानि सन्ति। तान्यत्र समुदाहरानि यथा—

यस्यां वेदचतुष्टयं सुविपुलं यस्याञ्च गीतामृतम्,
यस्यां भाति पृथातनूजचरितं यस्याञ्च रामायणम्।
यस्यां काव्यपरम्परा च मृदुला संशोभते श्रेयसी,
तस्या देवगिरोऽद्य हन्त ! बहुभिर् लोकैरुपेक्षा कृता ॥ १ ॥

यस्यां भारतसंस्कृतिः सुनिहिता यस्यां परं दर्शनम्,
यस्यां शास्त्रकदम्बकं सुविशदं यस्यां पुराणानि च।
यस्यां शोभनराजनीतिरतुला जागर्त्ति देशोदये,
तस्या देवगिरोऽधिकारिविहिता हा हन्त ! केयं दशा ॥ २ ॥

अद्याङ्ग्लारमणीकटाक्षविशिखैर लोका अनेके हृताः,
ते निन्दन्ति दिवानिशं सुरगिरं स्वीयामिवाम्बां शिवाम्।
कार्याकार्यविवेकहीनमतयः पश्यन्ति ते नो हितम्,
भूयस्तुच्छनिजार्थसाधनरता ईर्ष्यन्ति धर्माय च॥ ३ ॥

भो भो नेतृजनाः ! मनांसि भवतां रूक्षाणि हा ! संस्कृते,
अङ्ग्रेजीं प्रति वर्धतेऽनुदिवसं स्नेहो गरीयानयम्।
दर्श दर्शममुं हि विस्मयमहं पृच्छामि पर्याकुलः,
जातोद्वाहजनैः स्वसंस्कृतियुतैर् माता न किं सेव्यते ? ॥ ४ ॥

कान्ताकान्तकटाक्षतीक्ष्णविशिखैर् विद्धा युवानो नराः,
ये केऽप्यात्मविकत्थनाः स्वजननीं निन्दन्ति मूर्खाधमाः।
ये चाङ्ग्लामधिगम्य मुग्धमतयोऽसूयन्ति दैव्यै गिरे,
सत्यं ब्रूत विचार्य शीतमनसा किन्तेषु काचिद् भिदा ? ॥ ५ ॥

मृद्वीकारसपानतृप्तहृदयास् सन्तोऽपि लोके नराः,
इच्छां किन्न वितन्वते सुमधुरे पक्वे रसाले फले ?
आम् ! चेद्वा वचनं तदा मम वचो निश्चप्रचं श्रूयताम्,
अङ्ग्रेज्या सह देववागधिगमोऽवश्यं समारभ्यताम् ॥ ६ ॥

हृद्यां भव्यविचारसारसहितां सिक्तां दयावारिणा,
दाक्षिण्यादिगुणैर्विभूषिततनुञ् चातिथ्यकार्ये पराम् ।
सत्याहिंसनशिक्षिकामभयदां संसारशङ्कारिकाम्,
ज्ञातुं भारतसंस्कृतिं यदि मनस् तत्संस्कृतं सेव्यताम् ॥ ७ ॥

धर्माधर्मविचारशक्तिसहिताः पाठेन यस्या गिरः,
जायन्ते वरणीयशुद्धचरिताः सङ्घे च यस्या नराः ।
यस्यामस्ति च भारतीयगरिमा यस्याञ्च राष्ट्रैकता,
सा भाषा ननु संस्कृतं विजयतां स्वातन्त्र्यकाले फले ॥ ८ ॥

एतावता विवेचनेन, मदीयेन मतेन, एतन्निर्भ्रान्तं सिद्ध्यति यदधुना स्वीये भारतराष्ट्रे एव अस्या देवभाषायाः संस्कृतभाषाया महादुर्गतिर्वोभूयमानास्ति, या भारतराष्ट्रस्य कृते हानिकारी भविता अतस्तदपाकरणाय सायासाः प्रयासाः ध्रुवमाशु च विधेयाः सन्ति; अन्यथा मानवमात्रकल्याणपरायणेयं ज्ञाननदी संस्कृतभाषा जोषं शोषं यास्यतीतिविचारमादाय संस्कृतभाषाभ्युदयहेतुभूताः केचनोपाया मयात्र प्रस्तूयन्ते ।

**प्रचारोपायाः**

मया प्रस्तूयमानेषु गीर्वाणवाणीविकासहेतुषु एषूपायेषु केचित् शासनाधीनाः सन्ति, केचिच्च समाजाधीनाः । तत्र प्रथमं शासनाधीनानेव प्रस्तौमि ।

यथा हि—

(१) संस्कृतविश्वविद्यालयसञ्चालितानां सर्वासामेव परीक्षाणां मान्यता इतरविश्वविद्यालयसञ्चालिताभिः माध्यमिकशिक्षापरिषत्सञ्चालितताभिश्च परीक्षाभिः सह यथास्तरं निर्विशेषं निष्प्रतिबन्धं च समाना विधीयेत ।

(२) संस्कृतविद्यालय-महाविद्यालयेभ्योऽपि अन्यविद्यालय-महाविद्यालयेभ्य इव पर्याप्तमनुदानं दीयेत ।

(३) तत्रत्याध्यापकानाम् अन्येषां च कर्मचारिणां स्तरं वेतनमानं च प्रशस्तं क्रियेत ।

(४) तत्रापेक्षितानाम् अध्यापकानाम् अन्येषां च कर्मचारिणां व्यवस्थायां ध्यानं दीयेत ।

(५) तत्र शिक्षणभवन-कार्यालय-पुस्तकालय-वाचनालय-छात्रावास-क्रीडाक्षेत्रादीनां सुचारुतया व्यवस्था विधीयेत ।

(६) संस्कृतभाषामधीयानेभ्यो विद्यार्थिभ्यो देशे सर्वेष्वेव शिक्षा-संस्थानेषु छात्रवृत्तिदाने वरीयस्त्वं निश्चीयेत ।

(७) पाठ्यक्रमेषु संशोधनं कार्येत, यावद् ज्ञानं समाजाय अपेक्षितं भवेत् तावदेव तत्र समायोज्येत ।

(८) व्याकरणसारल्यनैपुणीनिपुणाः कुशलाः निष्ठावन्तश्चाध्यापकाः वैशिष्ट्यपुरस्सरं दीक्षिता विधेयाः, ते च तदर्थं नियोज्येरन् ।

(९) संस्कृतशिक्षाया माध्यमं संस्कृतमेव निर्धार्येत ।

(१०) संस्कृते समाचारपत्र-पत्रिकादीनां प्रकाशकेभ्यो विपुलानुदानं दीयेत ।

(११) सर्वेषु शिक्षासंस्थानेषु 'सामान्यसंस्कृतम्' (जनरल संस्कृत) इति नाम्ना एकं प्रश्नपत्रम् अनिवार्यं क्रियेत ।

(१२) संस्कृतवाङ्मये अनुसन्धित्सूनां कृते विशिष्टाश्छात्रवृत्तयो दीयेरन् ।

(१३) समये समये राष्ट्रे प्रतिप्रदेशं प्रतिक्षेत्रं च संस्कृतविदुषां सभाः आयोज्येरन्, तत्र च संस्कृतवाङ्मयस्य उत्कृष्टा लेखकाः, प्रचारकाः, अध्यापकाः, प्रकाशकाः, शिक्षणसंस्थासञ्चालकाः, छात्राश्च यथास्तरं समभिनन्द्येरन् ।

(१४) आकाशवाणीमाध्यमेन देशे सर्वत्रैव संस्कृतभाषायामपि समाचारा बहुवारं श्राव्येरन्। संस्कृतशिक्षापि सायं प्रातः प्रदीयेत। 'आकाशवाण्याः संस्कृतसेवा' इतिनामा तत्रैकः पृथगनुभागोऽपि संस्थाप्येत, यतः 'फिल्म'-गीतश्रावणपुरस्सरं काव्य-नाटक-कथा-आख्यानक-लेखपाठ-चर्चा-परिचर्चा-अन्त्याक्षरी-कविसम्मेलनादीनां संस्कृत-वाङ्मयविविधविधाविकासोपयोगिनां कार्यक्रमाणां रुचिकरी प्रस्तुतिः कार्येत।

(१५) राष्ट्रभाषापदे काचिदपि क्षेत्रीयभाषा सफला, समादृता, सर्वानुमता च भवितुं नैव शक्नोति। अतस्तत्र अखिलभारतीया, सार्वभौमा, क्षेत्रीयवाद-प्रान्तीयवादाभ्यां विहीना, सरला, सुबोधा च संस्कृतभाषा एव समभिषिच्येत। सर्वेभ्यश्च तदीयव्यावहारिकज्ञान-वितरणार्थं राष्ट्रव्यापिनः सुनियोजिताः राजकीयाः प्रयासाः विधीयेरन्।

अथाग्रे समाजाधीनानपि कांश्चिदुपायान् प्रस्तौमि। यथाहि--

(१) संस्कृतभाषा न केवलानां दरिद्राणां पौरोहित्यकारकाणां ब्राह्मणानामेव भाषा, अपितु सर्वेषामेव; इति धिया सर्वे एव एनां पठेयुः।

(२) भारतीयसंस्कृतिसभ्यतासंस्कारेषु सर्वे श्रद्धां स्वाभिमानं च कुर्युः।

(३) संस्कृताध्ययनसंजातनिर्मलान्तःकरणानां छात्राणां समुचितमादरं कुर्युः।

(४) भारतीयतारक्षणार्थं सर्वे संस्कृतभाषाम् अनिवार्यरूपेण पठेयुः।

(५) संस्कृताध्यापकाः सोत्साहा भूत्वा छात्रान् पाठयेयुः। अन्येष्वपि विद्यालयेषु सामाजिकेषु वा कार्येषु ते निपुणतापूर्वकं भागं गृह्णीयुः, येन ते लोकप्रिया भवेयुः।

(६) समये समये शिक्षणसंस्थासु अन्येषु चोपयुक्तेषु स्थानेषु संस्कृतभाषायामेव नाटक-भाषण-कविसम्मेलनादीनां व्यवस्था भवेत्।

(७) संस्कृतज्ञाः जनाः संस्कृतज्ञैः जनैः सह वार्तालापे पत्रव्यवहारे च सदैव संस्कृतभाषामेव प्रयुञ्जीरन् ।

(८) समर्थाः संस्कृतविद्वांसो विविधां समाजानुकूलां च साहित्य-सर्जनामपि प्रतिदिनं कुर्युः ।

(९) संस्कृतभाषायां प्रकाशितानां समाचारपत्राणां पत्रिकाणां च, क्रयणं पठनं च सर्वे कुर्युः । आकाशवाण्या संस्कृतभाषायां प्रसार्यमाणान् समाचारानपि सर्वे नियमपूर्वकं शृणुयुः ।

(१०) संस्कृतवाङ्मयस्य विविधासु शाखा-प्रशाखासु शास्त्रोपयोगि समाजोपयोगि च विविधमनुसन्धानकार्यमपि सर्वे विदधीरन् ।

(११) संघटनापटवो जनाः संस्कृतभाषाप्रचारप्रसारमात्रैकलक्ष्याः सार्वजनीनाः संस्थाः विधिपुरस्सरं संस्थापयेयुः ।

अनेन प्रकारेण संक्षेपेणैव अहमत्र संस्कृतभाषोपकारकान् कांश्चिदुपायान् प्रस्तुतवानस्मि । वस्तुतस्तु न केवलम् इमे एव, अपितु एवंविधाः अन्येऽप्यनेके उपायाः सन्ति; येषां संसिद्धौ, मन्ये, स्वीयं भारतं भूयो भा-रतं भारतं भवेत् । परमत्र इदमपि तथ्यमुल्लेखनीयमस्ति यत् शासनाश्रयं प्राप्यैव कापि भाषा वर्धते, इतरथा तु सा विपद्यते एव । अतोऽन्ते मया साग्रहं प्रार्थ्यते स्वीयं भारतीयं शासनम्, यत्तत्सत्वरमेव स्वकीयाया मातृभाषायाः संस्कृतभाषायाः सम्पूर्णे एव भारते राष्ट्रे सर्वजनीनं सर्वाङ्गीणञ्च समुद्धारं कुर्यादिति दिक् ।

## काव्यप्रयोजनानि

स्वार्थपूर्णेऽस्मिन् संसारे एतादृशः कश्चिदपि प्राणी नयनपथं नायाति, यः प्रयोजनं विनैव किमपि कार्यं कुर्यात् । इदमनुभूयैव केनापि अभिरूपेण कथितमस्ति यत् 'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तते' इति । अतः काव्यसर्जनासदृशे अतिमहति कार्ये प्रयोजनं विना कस्यचिदपि प्रवृत्तिः सुतरामसम्भवा एवास्तीत्यत्र मन्ये न केषामपि व्यावहारिकधीजुषां विसंवादो भविष्यति ।

अहं पश्यामि यदास्माकीने काव्यशास्त्रे पुरातनकालादेव काव्य-प्रयोजनेषु विचारो विधीयमानोऽस्ति बुधैः । अस्यां विचारमालायां सर्वप्रथमं भरतमुनिमतं मन्यते । तदीये नाट्यशास्त्रे समुपलभ्यमानं तत्कृतं काव्यप्रयोजनविवेचनमत एवात्र मयापि सर्वप्रथमं प्रस्तूयते—

'दुःखार्त्तानां श्रमार्त्तानां शोकार्त्तानां तपस्विनाम् ।<br>
विश्रान्तिजननं लोके नाट्यमेतद् भविष्यति ॥<br>
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् ।<br>
लोकोपदेशजननं नाट्यमेतद् भविष्यति ॥"

स्पष्टमाभाति यद् भरतमुनेः काव्यप्रयोजनविषयको दृष्टिकोणो व्यापकोऽस्ति । स दुःखिनां श्रमश्रान्तानां च मनोरञ्जनं तु काव्यप्रयो-जनं मन्यते एव, किन्तु तेन सहैव धर्मबुद्धिप्रचारं, यशोवृद्धिकामनाम् आयुषो रक्षाभावनां, बुद्धिविशदतां तथा लोकोपयोगिसन्देशवाहकता-मपि काव्यप्रयोजनत्वेन संख्याति । वस्तुतोऽस्य अनुभवोऽपि सर्वाङ्गीण आसीत् । अत एवानेन मानवमनोभूमिसुलभानां भावानां विशदानुभवं विधायैव व्यापकरूपेण काव्यप्रयोजनानि निश्चितान्यासन् ।

अथाग्रे समायाति काव्यशास्त्रपितामहो भामहो यो लिखति स्वकीये काव्यालङ्कारे यद्—

"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्त्ति प्रीतिं च साधुकाव्यनिबन्धनम् ।।

अयमाचार्यो धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टये तथा निखिलासु कलासु प्रवीणतालाभं, कीर्त्ति तथा प्रीतिं काव्यसर्जनाप्रयोजनेषु अजीगणत् । यद्यपि भामहाचार्येण अस्यां कारिकायां कविमनसि वर्तमाना कीर्त्तिकामना, आनन्दभावना, समाजोपयोगिनी पुरुषार्थ-चतुष्टयचातुरी, चतुःषष्टिकलानैपुणी च काव्यसर्जनाप्रयोजनसीमनि परिसंख्याताः सन्ति, किन्त्वग्रे चलित्वा तेन काव्यप्रयोजनेषु कीर्त्तिरेव भूयो भूयः प्रशंसितास्ति । एतेन सिद्ध्यति यत्स काव्यप्रयोजनेषु कीर्त्ति प्रधानं प्रयोजनं मन्यते । अस्मिन् सन्दर्भे स लिखति—

"उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ।।
रुणद्धि रोदसी चास्य यावत्कीर्त्तिरनश्वरी ।
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ।।
अतोऽभिवाञ्छता कीर्त्ति स्थेयसीमाभुवः स्थितेः ।
यत्नो विदितवेद्येन विधेयः काव्यलक्षणः ।।"

वामनाचार्यदृष्टौ काव्यसृष्टेरुभे एव प्रयोजने स्तः । तयोरेकं दृष्टप्रयोजनम्, अन्यच्च अदृष्टप्रयोजनम् । तन्मते दृष्टप्रयोजनं प्रीति-रस्ति, अदृष्टप्रयोजनं च कीर्त्तिः । यथा हि स लिखति स्वीये काव्या-लङ्कारसूत्रवृत्तिसंज्ञे ग्रन्थे यत् 'काव्यं सद् दृष्टादृष्टार्थं प्रीतिकीर्त्तिहेतु-त्वात्' इति ।

किन्तु कीर्त्तिरूपे काव्यप्रयोजने अस्यापि विशिष्टं ध्यानमासीत् । अत एव स्वीयमिदं सूत्रं विवृण्वन् सोऽग्रे लिखति—

"प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः ।
अकीर्त्तिवर्त्तिनीं त्वेवं कुकवित्वविडम्बनाम् ।।
कीर्त्ति स्वर्गफलामाहुरासंसारं विपश्चितः ।
अकीर्त्तिन्तु निरालोकनरकोद्देशदूतिकाम् ।।
तस्मात्कीर्त्तिमुपादातुमकीर्त्तिञ्च निर्बाहितुम् ।
काव्यालङ्कारसूत्रार्थः प्रसाद्यः कविपुङ्गवैः ।।"

काव्यालङ्कारकारो रुद्रटाचार्यस्तु काव्यप्रयोजनेषु विस्तरेण विचारं चकार। तदीया धारणासीत् यत् काव्यसर्जनया आकल्पमनल्पं यशः प्रसरति; महीयान् धर्मो भवति; अर्थो लभ्यते; कामजं मोक्षजं च सुखमनुभूयते; विपदः शाम्यन्ति, चतुर्वर्गविषयकं ज्ञानं सरसतया वितीर्यते; अन्यदपि च यद् यदभीष्टं भवति, तत्तत्सर्वं प्राप्यते। यतो हि तस्य दृष्टौ काव्यसर्जनाप्रयोजनानामानन्त्यमपि विद्यते। अस्मिन् सन्दर्भे स लिखितवानस्ति—

"ज्वलदुज्ज्वलवाक्प्रसरः सरसं कुर्वन् महाकविः काव्यम्।
स्फुटमाकल्पमनल्पं प्रतनोति यशः परस्यापि ॥"
"अन्योपकारकरणं धर्माय महीयसे च भवतीति।
अधिगतपरमार्थानामविवादो वादिनामत्र ॥
अर्थमनर्थोपशमं शमसममथवा मतं यदेवास्य।
विरचितरुचिरसुरस्तुतिरखिलं लभते तदेव कविः ॥"
"ननु काव्येन क्रियते सरसानामवगमश्चतुर्वर्गे।
लघु मृदु च नीरसेऽभ्यस्ते हि त्रस्यन्ति शास्त्रेभ्यः ॥"
"कियदथवा वच्मि यतो गुरुगुणमणिसागरस्य काव्यस्य।
कः खलु निखिलं कलयत्यलमलघुयशोनिदानस्य ॥"

किन्तु प्रतीयते यत्कल्पान्तस्थायियशः-प्राप्तिरस्यापि दृष्टौ सर्वेषु काव्यप्रयोजनेषु प्राधान्यं लभतेतमाम्। यतोहि अयमिदं साग्रहं निवेदयामास यत्—

"स्फारस्फुरदुरुमहिमा हिमधवलं सकललोककमनीयम्।
कल्पान्तस्थायि यशः प्राप्नोति महाकविः काव्यात् ॥
अमरसदनादिभ्यो भूता न कीर्त्तिरनश्वरी
भवति यदसौ संवृद्धापि प्रणश्यति तत्क्षये।
तदलममलं कर्त्तुं काव्यं यतेत समाहितो
जगति सकले व्यासादीनां विलोक्य परं यशः ॥"

ध्वन्यालोकरचयिताऽऽनन्दवर्धनाचार्यो ध्वनिनिरूपणप्रयोजनं प्रतिपादयन्नाह—'तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपम्' इति। एतेन सिद्ध्यति यत्तस्य दृष्टौ सहृदयमनः प्रीतिरेव काव्यस्यापि परमं

प्रयोजनमासीत् । तदीयंतत्कथनस्य लोचनाख्यां विख्यातां व्याख्यां प्रकुर्वन् श्रीमदभिनवगुप्तपादाचार्योऽपि कविकृते कीर्त्तिप्रीत्योः तथा पाठककृते व्युत्पत्तिप्रीत्योः प्रीतिमेव प्रमुखं काव्यप्रयोजनं निर्धारयति। यतो हि तस्याभिप्रायोऽस्ति यत् कवेः कीर्त्तिकौमुदी यथा यथा प्रसरति, तथा तथा तदीये हृदये प्रीतिपाथोधिरुज्जृम्भते । एतस्मात्सिद्ध्यति यत्कविहृदये विद्यमाना काव्यसर्जनाजनितकीर्त्तिकामनापि अन्ततो गत्वा तदीयस्वान्तःसुखायैव संजायते। एवमेव काव्यपाठकस्य व्युत्पत्तिर्यथा यथा वर्धते, तथा तथा तदीये हृदये प्रीतिरेव प्रस्फुटति । एतेनापि संसिद्ध्यति यत् काव्यपाठकस्य मनसि वर्तमाना काव्यानुशीलनेन व्युत्पत्तिप्राप्तिभावनापि तत्प्राप्त्यनन्तरं तत्प्रीतिमेव जनयतीति ध्वन्यालोकलोचनाध्यायिनां स्वाध्यायिनां यद्यपि नास्ति परोक्षम्, तथापि मनस्तोषाय तदुक्तमत्रापि प्रस्तूयते –

"तत्र कवेस्तावत्कीर्त्यापि प्रीतिरेव सम्पाद्या । यदाह—'कीर्त्ति स्वर्गफलामाहुः' इत्यादि । श्रोतॄणां च व्युत्पत्तिप्रीती यद्यपि स्तः, यथोक्तम्—

'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्त्ति प्रीतिञ्च साधुकाव्यनिषेवणम् ॥' इति ॥

तथापि तत्र प्रीतिरेव प्रधानम् । अन्यथा प्रभुसम्मितेभ्यो वेदादिभ्यो मित्रसम्मतेभ्यश्चेतिहासादिभ्यो व्युत्पत्तिहेतुभ्यः कोऽस्य काव्यरूपस्य व्युत्पत्तिहेतोर्जायासंमितत्वलक्षणो विशेष इति प्राधान्येनानन्द एवोक्तः । चतुर्वर्गव्युत्पत्तेरपि चानन्द एव पार्यन्तिकं मुख्यं फलम् ।"

आचार्यकुन्तको वक्रोक्तिजीविते काव्यप्रयोजनप्रतिपादनप्रसंगे लिखति—

"धर्मादिसाधनोपायः सुकुमारक्रमोदितः ।
काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः ॥
व्यवहारपरिस्पन्दसौन्दर्यंव्यवहारिभिः ।
सत्काव्याधिगमादेव नूतनौचित्यमाप्यते ॥
चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम् ।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते ॥"

कुन्तकोऽभिप्रैति यद् धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयस्य प्राप्तिः, हृदयाह्लादनं, लोकव्यवहारनैपुण्यं, चित्तचमत्कारश्चेति काव्यप्रयोजनानि सन्ति । न जाने कथमयं कीर्त्ति काव्यप्रयोजनेषु नैव परिसंख्यातवान् । इतरथा तु अस्यापि काव्यप्रयोजनपरिसंख्यानम् अनुभूतिपरकमेव आभाति ।

अथायाति सरस्वतीकण्ठाभरणालङ्कारकारो महाराजो भोजदेवः अयमपि कीर्तिप्रीती एव काव्यप्रयोजनत्वेन अङ्गीकरोति । तेनोक्तमस्ति यत्—

"निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्त्ति प्रीतिं च विन्दति ॥"

अनेन यत्किमप्यलेखि, तत्सर्वं कीर्त्तये स्वान्तः प्रीतये चैवालेखि । यतोहि भूपतित्वात् कीर्त्तिप्रीतिभ्यामितरत्किमपि तत्कृते अप्राप्यं नासीत् । प्रतीयते अत एव तेन केवले कीर्त्तिप्रीती एव काव्यप्रयोजनत्वेन परिगणिते स्तः ।

अथागच्छन्ति मम दृष्टौ काव्यशास्त्रकाननकेसरिणो मम्मटाचार्यचरणाः । इमे स्वकीये काव्यप्रकाशे लिखन्ति—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥

कालिदासादीनामिव यशः, श्रीहर्षादेर्धावकादीनामिव धनम्, राजादिगतोचिताचारपरिज्ञानम्, आदित्यादेर्मयूरादीनामिवानर्थनिवारणम्, सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम् प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणं कविकर्म, तत् कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र यतनीयम् ।"

अनेनोद्धरणेन स्पष्टं भवति यन्मम्मटाचार्यमतेन काव्यप्रयोजनानि षट् सन्ति । यथाहि—(१) यशोलाभः, (२) धनप्राप्तिः, (३)

व्यवहार (लोकाचार) परिज्ञानम्, (४) अमङ्गलनिवारणम्, (५) स्वान्तःसुखोपलब्धिः, (६) सरसतया उपदेशभावना च। वस्तुतस्तु मम मनसीदं परिस्फुरति यद् वाग्देवतावतारेण श्रीमम्मटाचार्येण स्वपूर्ववर्त्तिनां समसामयिकानां च सर्वेषामेव काव्यशास्त्राचार्याणामभीष्टानि काव्यप्रयोजनानि सम्यग्विश्लिष्य स्वयं च कवीनां महाकवीनां च जीवनचर्यां मनोभावनां च सम्यगनुभूय विमृश्य च समन्वितरूपेण काव्यप्रयोजनानि निर्धारितानि सन्ति। अत एव तन्निर्धारितेषु काव्यप्रयोजनेषु अन्याचार्यनिर्धारितानां काव्यप्रयोजनानामपेक्षया भूयसी सर्वाङ्गीणता तथ्यात्मकता च दरीदृश्येते। यतोहि को नामैतादृशो महाकविः कविर्वा विद्यते, यो 'जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः। नास्ति येषां यशःकाये जरामरणजं भयम्॥' इत्याकर्ण्य यशोऽवाप्तये काव्यसर्जनायां प्रवृत्तो न भवेत्? किन्तु अर्थप्रधाने युगे अर्थोपासनापरित्यागोऽपि नितरां दुष्करोऽस्ति। कविभ्योऽपि धनस्यावश्यकता भवत्येव। अतस्तेषां मनसि यदि धनोपार्जनाय काव्यनिर्माणकामना जायते, तर्हि न काप्यनौचिती तत्र। साम्प्रतन्तु अहं पश्याम्येव यदनेकेषां कवीनां महाकवीनां च कविकर्मैव जीविकास्ति। एवमेव केन सह कथङ्कारं व्यवहरणीयम्? कुत्र किं कीदृशं च विधेयम्? साधारणेषु असाधारणेषु च जनेषु कीदृशो व्यवहारो विधातव्यः? इत्यादिकस्य सर्वविधस्यापि लोकाचारस्य परिज्ञानं काव्याद् भवतीत्यत्रापि कः संशयीत? मन्ये, न कोऽपि संशयीत। यतोहि लोकाचार-विचार-व्यवहारविहीनोऽपि जनः काव्यानुशीलनेन सर्वविधलोकाचारविचारव्यवहारविद् बोभूयते, इति प्रत्यक्षमेव सर्वेषाम्। अनेनैव प्रकारेण अमङ्गलनिवारणस्यापि काव्यप्रयोजनत्वे न कापि संशीतिरुत्पद्यते। प्रायेण स्तोत्रकाव्यानां सर्जना तु एतदर्थमेव विधीयते। तेषां निर्माणेन नैत्यिकपाठेन वा तत्सम्बद्धो देवः प्रसन्नो भूत्वा निर्मातुः पाठकस्य वा सकलक्लेशनिवारणं करोति। अस्मिन् सन्दर्भे सूर्यशतकनिर्माणेन मयूरस्य, चण्डीशतकसर्जनया बाणभट्टस्य, 'हनुमान्-बाहुक'-निर्माणेन च तुलसीदासस्य अमङ्गलनिवृत्तिः प्रसिद्धैवास्ति। एवञ्च सद्यः परनिर्वृतिः अर्थात् निर्माण-पठनसमकालमेव मनसि अमन्दानन्दसन्दोहसमुद्भूतिरपि असंशयमेव काव्यप्रयोजनं वरी-

दृश्यते यतोहि काव्य-सर्जनासमाप्तिसमये कवेर्मनसि, किंवा काव्य-स्वाध्यायसमये पाठकस्य मनसि, काचिद् विलक्षणा एव वाचामगोचरा विगलितवेद्यान्तरा चामन्दानन्दसन्दोहानुभूतिर्बोभवीतीत्यत्र समेषामेव शेमुषीजुषां सहृदयानामैकमत्यं विद्यते। अन्यच्च कान्तासम्मिततयोपदेशदानमपि काव्यसर्जनायाः रम्यं प्रयोजनमस्ति। एवं हि दृश्यते लोके यज्जने यथा कान्ताया वचसां प्रभावो भवति, तथा न पितुर्वचसाम्, न च मित्रस्य वचसाम्। अनेनैव प्रकारेण समाजे यथा काव्यस्य प्रभावो भवति, तथा न वेदानाम्, न च पुराणादीनाम्। अतः समीचीनमेवोच्यते मम्मटेन यत्कान्तासम्मिततयोपदेशदानभावनापि काव्यसर्जनाप्रयोजनं भवति।

अहं मन्ये यन्मम्मटाचार्येण काव्यप्रयोजननिरूपणावसरे 'यथायोगं कवेः सहृदयस्य च' इति लिखित्वा द्वे प्रयोजने कविकृते, द्वे प्रयोजने पाठककृते, द्वे प्रयोजने उभयकृते निर्धारिते स्तः। किं किं कस्य कृते ? इति विचिकित्सावारणाय रेखाचित्रमत्र प्रस्तूयते--




मम्माटाचार्यानन्तरं जातेषु काव्यशास्त्राचार्येषु साहित्यदर्पणकारो विश्वनाथो रसगङ्गाधरकारश्च पण्डितराजो जगन्नाथो नूनमेव समीक्षकाणां समाजे महत्त्वभाजो विद्येते। अतोऽत्रानयोरपि काव्यप्रयोजनविषयकान् विचारान् प्रस्तोतुं मदीयं मनः कामयते सर्वप्रथमं विश्वनाथाशयं प्रस्तौमि--

"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते॥

चतुर्वर्गफलप्राप्तिर्हि काव्यतो 'रामादिवत्प्रवर्तितव्यं न रावणादिवत्' इत्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण सुप्रतीतैव । उक्तं च भामहेन—

'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिबन्धनम् ॥" इति…॥"

स्पष्टमस्ति यद्विश्वनाथो धर्मार्थकाममोक्षरूपचतुर्वर्गस्य सारल्येन प्राप्तिमेव काव्यसर्जनायाः प्रयोजनं मन्यते । अस्मिन् सन्दर्भे स भामहाचार्यमतेन भृशं प्रभावितः प्रतीयते ।

अथ पण्डितराजस्य जगन्नाथस्याशयः प्रस्तूयते । यद्यपि पण्डितराजेन काव्यप्रयोजनविषये बहुविधं न विचारितम्, तथापि काव्यस्य लक्षणकरणप्रसंगे तस्य विशेषणपदप्रयोगसमये अस्य काव्यसर्जनाप्रयोजनविषयकोऽपि विचारो विदितो भवति । स तत्र लिखति—

"तत्र कीर्ति-परमाह्लाद-गुरु-राज-देवताप्रसादाद्यनेकप्रयोजनकस्य काव्यस्य……लक्षणं तावन्निरूप्यते ।"

एतेनाभाति यदस्य दृष्टौ काव्यसर्जनायाः अनेकानि प्रयोजनानि सन्ति । अत एवायमत्र विशेषणपदाभ्यन्तरे 'आदि' शब्दम् 'अनेक' शब्दञ्च प्रयुक्तवानस्ति । किन्तु तेष्वशेषेषु काव्यप्रयोजनेषु कीर्त्ति, परमाह्लादं, गुरुप्रसादं, राजप्रसादं देवताप्रसादं च नामतो निर्दिश्य एतेषां काव्यसर्जनाप्रयोजनानां प्रसिद्धतां प्रतिपादयति ।

अथाहं कतिपयपाश्चात्यसमीक्षकाणामपि काव्यप्रयोजनविषयकाणि मतानि दित्सुरस्मि । तत्रेदं परिस्फुटं भविष्यति यत्सुदूरवर्त्तिष्वपि जनेषु समीक्षाशीलबुद्धिसाम्यात् कीदृशं कियच्च मनोहरं विचारसाम्यं भवति । सर्वप्रथमं प्लेटोमहोदयस्याशयं प्रस्तौमि । स कथयति यद् 'The right function of poet is to put before the soul the images of what is intrinsically great and beautiful.' अर्थात् चित्तसमक्षं महतः सुन्दरस्य च बिम्बविधानं कवेरुचितं कर्म विद्यते । श्रीजनॉड्राइडनो मन्यते यत् 'To teach delightfully is the chief function of poetry.' अर्थात् सरसरूपेण उपदेशदानमेव कवितायाः प्रमुखं प्रयोजनमस्ति । एवञ्च श्रीहॉरेसो बोधयति यत् 'To teach, to please, these are the

poets' aims, or at once to profit and to amuse. अर्थात् उपदेशः, प्रसादनं, धनलाभो मनोरञ्जनं च कवीनां प्रयोजनानि सन्ति ।

प्रसन्नताया विषयोऽयमस्ति यदस्मदीया मम्मटादयो भारतीयाः काव्यशास्त्रविपश्चितो यानि काव्यसर्जनायाः प्रयोजनानि मन्यन्ते, तान्येव पाश्चात्या अपि काव्यशास्त्रमनीषिणो मन्वते । कथन्न भवेदेवम् ? महानुभावानां हृदयसंवादास्तु भवन्त्येव ।

अथान्ते निबन्धेऽस्मिन् प्रस्तुतेषु समस्तेषु काव्यसर्जनाप्रयोजनविषयकेषु विदुषां विचारेषु विहङ्गमदृशा विमर्शे विहिते सतीदं प्रस्फुटं बोभूयते यन्मम्मटाचार्यसम्मतानि काव्यसर्जनाप्रयोजनानि नूनमेव मधुमक्षिकान्यायनिहितानि, सर्वमतसमन्वितानि, सर्वाङ्गीणानि च सन्तीति विनिवेद्य भवादृशेषु विपश्चिदपश्चिमेषु इतोऽधिकं विषयपल्लवनं मुधेति विमृश्य मुदा विरमामि विस्तरात् ।

# वाक्यं रसात्मकं काव्यम्

अमरभारतीभासुरवाङ्मयस्य काव्यलक्षणग्रन्थानामवेक्षणेन नाविदितमवशिष्यते शेमुषीजुषां केषामपि विदुषाम्, यत् काव्यकलेवरं कलयता धीमता विश्वनाथेन स्वीये साहित्यदर्पणे वाग्देवतावतार-श्रीमम्मटाचार्यविरचितायाः काव्यप्रकाशे प्राप्यमाणायाः 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इत्येवंरूपायाः काव्यपरि-भाषायाः विशिष्टाभिनिवेशेन प्रौढिपुरस्सरं खण्डनं विधाय स्वमनो-ऽनुकूला 'वाक्यं रसात्मकं काव्यम्' इत्येवंरूपा काव्यपरिभाषा प्रस्तुतास्ति। यस्या भावोऽयमस्ति यद् रस्यते=आस्वाद्यते अभिरूपैः यः स रसः= आह्लादरूपः। स रस एव चात्मा यस्य, तद् रसात्म-कम्; तथा स्वाभिप्रायबोधनक्षमः शब्दसमूहो वाक्यं भवति। एवञ्च मिलित्वा स्वाभिप्रायबोधनक्षमं रसात्मकं वाक्यं काव्यं भवति।

परिभाषायामस्यां श्रीविश्वनाथेन हृदयस्य सुकुमारपक्ष एव परा-मृष्टोऽस्ति। अयं महानुभावः काव्यस्य कृते रसस्य केवलामपरिहर-णीयतामेव नहि समाद्रियते, अपितु काव्ये तस्य रसस्य प्राधान्यम् ओतप्रोतत्वं भूमानं वापि समर्थयतेतराम्। अत्र न कापि संशीति-कणिकास्ति यद्, यद् वाक्यं श्रुतिविषयीविधाय श्रोतुश्चित्तसागरे भावतरङ्गाः, अनुभावलहर्य्यः, सञ्चारिभावोर्मयो वा समुद्गच्छेयुः, तदेव वाक्यं वस्तुतः काव्यनामभाग् भवितुमर्हति। अन्येषु शब्देषु कथयितुं शक्यते यद्, यद् वाक्यं श्रोतुः हृदयं संस्पृशेत्, आन्दोलयेत्, तदेव हि काव्यम्। यतो हि कवितायाः स्रोतोऽपि हृदयमस्ति तथा तदीयं गन्तव्यमपि हृदयमेवास्ति। कविता कविहृदयात् निर्गच्छति, श्रोतुश्च हृदयमाविशति। इयमेतादृशी धारा विद्यते, या कविमान-सरूपिणी मानससरोवरात् प्रकाशते तथा श्रोतृहृदयरूपिणं समुद्रमा-विशति। इयं कविता एतादृशी हृद्यानवद्याङ्गी कामिनी वर्तते, या कविरूपिण्या मातुर्हृदयात् प्रादुर्भवति तथा सहृदयश्रोतृहृदयरूपं

पतिहृदयं प्रविशति । वस्तुतः काव्यस्य जन्मापि रसादेव भवति; स्वयमपि काव्यं रसमयं भवति; तस्य च लक्ष्यमपि रसनिष्पत्तिरेव भवति । एवं रीत्या आदिमध्यावसानेषु त्रिष्वपि समयेषु काव्यं रसानुविद्धमेव । अत एव तु काव्यरसानन्दो ब्रह्मानन्दसहोदरत्वं प्राप्नोतितमाम् ।

साहित्यदर्पणस्य सर्जनावेलायां विश्वनाथस्य समक्षं भामह-वामन-रुद्रट-आनन्दवर्धन-कुन्तक-भोजराज-मम्मटादीनामनेकेषां काव्य शास्त्राचार्याणां काव्यपरिभाषाः आसन् । किन्तु 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इत्यस्यां मम्मटाचार्यप्रणीतायां काव्यपरिभाषायामन्यासां सर्वासामेव काव्यपरिभाषाणां समन्वितं सारसर्वस्वमवेक्ष्य श्रीविश्वनाथेन मम्मटकृतकाव्यपरिभाषाया एव महता संरम्भेण आलोचना विहितास्ति तथा तस्यामनेके दोषाः प्रदर्शिताः सन्ति । मम्मटकृतकाव्यपरिभाषान्तर्गतानि 'अदोषौ-सगुणौ-अनलङ्कृती' इति त्रीण्यपि पदानि विश्वनाथाय नैव रोचन्ते । यतो हि तदीयदृष्टौ शब्दार्थौ दोषरहितौ नैव भवितुं शक्नुतः । यदि भविष्यतोऽपि क्वापि, तर्हि विरलावेव । एवं सति काव्यं निर्विषयं प्रविरलविषयं वा भविष्यतीति महान् दोषो भवति । केवलमेतावदेव नैव, अपितु—

"न्यक्कारो ह्ययमेव मे यदरयस् तत्राप्यसौ तापसः,
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा,
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥"

इति पद्ये विधेयाविमर्शदोषसत्त्वात् मम्मटीयकाव्यपरिभाषादृष्ट्या तु काव्यत्वमेव विनश्यति, का कथा पुनरत्र आनन्दवर्धनाचार्यसम्मतस्य उत्तमकाव्यत्वस्य ? एवमेवात्र 'सगुणौ' इतीदमपि विशेषणं साधीयो नास्ति । यतोहि गुणा अपि शब्दार्थधर्मा नैव भवन्ति, ते तु रसधर्मा एव । एवञ्च काव्यप्रकाशे मम्मटाचार्योदाहृते—

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाः,
ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।

सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ,
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥"

इत्येवं रूपे काव्योदाहरणेऽपि श्रीविश्वनाथो मम्मटीयां काव्य-परिभाषां स्खलितामसंगताञ्च मन्यते । सोऽभिप्रैति यदस्मिन् 'यः कौमारहरः०'—इत्यादिपद्ये विभावनाविशेषोक्तिसङ्कररूपा अलङ्कारत्रयी वर्तते एव; कथन्तर्हि परिभाषान्तर्गतस्य 'अनलङ्कृती' इति विशेषणभूतपदस्य 'चरितार्थता भवेदस्मिन् पद्ये ? कथमपि नैवेति निश्चप्रचमिति रीत्या मम्मटीयकाव्यपरिभाषां खण्डयित्वा श्री विश्वनाथो रसपूरपूरितं वाक्यमेव काव्यत्वेन स्वीकुर्वन् 'वाक्यं रसात्मकं काव्यम्' इत्येवंरूपां काव्यपरिभाषां निर्धारयति ।

किन्तु यावन्मात्रम् अधिगतकतिपयसाहित्यशास्त्रीयरहस्यायाः मामकीनायाः धिषणाया द्रुतिरस्ति, तावत्तु अहमिदमेव मन्ये यद् आचार्येण श्री विश्वनाथेन 'वाक्यं रसात्मकं काव्यम्' इत्येवंरूपा या काव्यपरिभाषा अकारि, सा तु साधीयसी विद्यते; किन्तु श्री वाग्देवतावतारेण मम्मटाचार्येण विहितायाः 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इत्येवंरूपायाः काव्यपरिभाषाया-स्तेन यत्खण्डनं कृतमस्ति, तन्न रमणीयमस्ति, नवा च गम्भीरमेव । यतोहि—

१-रसस्तु वाह्यो (वोढुं योग्यः) वहनीयः प्रापणीयो वा भवति ।
२-शब्दाः, अर्थाः, गुणाः अलङ्काराश्च तस्य वोढारो भवन्ति ।

अथ विचारणीयमस्ति तावद् विचक्षणैः विद्वच्चरणैः, यद्यावत अपेक्षितयोग्यतासम्पन्ना वोढारो न भविष्यन्ति, तावत्कथङ्कारं वोढुं योग्यो वोढुं शक्ष्यते ? कथमपि नैवेति निर्विवादम् । अत एव श्रीमम्मटेन काव्यात्मभूतस्य रसस्य वोढ्रोः अपेक्षितयोग्यतायुक्तयोः शब्दार्थयोः काव्यपरिभाषायां निरूपणं कृतमस्ति । यतोहि अपेक्षितयोग्यता-सम्पन्नशब्दार्थयोरभावे रसानुदयापत्तिराचार्यमम्मटस्य परोक्षं नासीत् । एवञ्च अदोषपदेनापि रसापकर्षकनित्यदोषाभाव एव मम्मटस्य सुतरामभीष्टोऽस्ति । अतो 'न्यक्कारो ह्ययमेव मे'०—इत्यादिपद्ये न काव्यत्वहानिः, नवा चोत्तमकाव्यत्वहानिराशङ्क-

नीया। एवमेव 'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता' इत्युक्त्या मम्मटाचार्यो गौण्या वृत्त्या शब्दार्थयोरपि तत्त्वविदां सम्मान्यां गुणस्थितिं दर्शयित्वा स्वकृतकाव्यपरिभाषान्तर्गतस्य 'सगुणौ' इति पदस्य चारितार्थ्यं प्रकटयति। अपरञ्च 'यः कौमारहरः' ०--इत्यादिपद्ये तु विभावनाविशेषोक्तिसङ्कररूपा अलङ्कारत्रयी अभावमुखेन मृग्यते, न भावमुखेन सा तत्र समुपलभ्यते। अतस्तदीयम् तत्र अस्फुटत्वमेव संसिद्ध्यति, नतु स्फुटत्वम्। लिखत्यपि तत्रैव वृत्तिकारः—'अत्र स्फुटो न कश्चिदलङ्कारः' इति।

एतत्सर्वञ्चित्रद् दर्शं दर्शमहं मन्ये यत् श्रीविश्वनाथकृता काव्यपरिभाषा काव्यस्य आभ्यन्तरं स्वरूपं साधु द्योतयति। किन्तु काव्यस्य बाह्यं कलेवरं तां निकषा नास्ति; तत्तु मम्मटाचार्य एव जानातितमाम्। परमेतावति सर्वस्मिंश्चिद् भूते सत्यपि आचार्यविश्वनाथप्रणीतायाः 'वाक्यं रसात्मकं काव्यम्' इत्येवंरूपायाः काव्यपरिभाषायाः सम्प्रति विद्वन्मण्डले भूयानादरो वरीवर्ति। आचार्यरामचन्द्रशुक्लेनापि रसस्य साधारणीकरणव्यापारप्रसंगे भङ्ग्यन्तरेण रसात्मकवाक्यस्यैव काव्यत्वं पर्यपोषि। सुदूरे विदेशे कालयिलमेथ्यु-आर्नल्ड-वर्ड्सवर्थ प्रभृतयः पाश्चात्यपण्डिता अपि काव्यसर्जनायां रसस्य प्राधान्यं द्योतयन्तो विश्वनाथाभिप्रायमिव परिपुष्णन्तीति विदितमेव विदुषामित्यलं पल्लवितेन।

## रसनिष्पत्ति

साहित्यशास्त्रे रसनिष्पत्तिमाधारीविधाय काव्यशास्त्रविदो भृशं विवदन्ते। किन्तु तेषां सर्वेषामेव विवादप्रासादानामाधारशिला भरतमुनिप्रणीतस्य नाट्यशास्त्रस्य 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इत्येकस्मिन्नेव सूत्रे वरीवर्त्ति। सूत्रस्यास्य तात्पर्यमस्ति यत् शकुन्तलादुष्यन्तादिरूपालम्बनविभावानां नदीतीरोद्यानचन्द्रचन्द्रिकादिरूपोद्दीपनविभावानां कटाक्षभुजविक्षेपस्मितादिरूपानुभावानां व्रीडाचपलतादिरूपव्यभिचारिभावानां च संयोगेन अर्थात् संसर्गेणशृङ्गारादिरसस्य निष्पत्तिः भवति।

अस्मिन् सूत्रे समायातं 'निष्पत्ति' शब्दमादाय साहित्यशास्त्राचार्याणां समाजे प्रमुखरूपेण प्रायश्चत्वारि मतानि प्रचलितानि सन्ति। यतो हि अस्य 'निष्पत्ति' शब्दस्य आचार्यैरस्मिन् सन्दर्भे अर्था एव चत्वारो विहिताः सन्ति। तेऽर्थाः इमे सन्ति—

(१) उत्पत्तिः,
(२) अनुमितिः,
(३) उपभुक्तिः,
(४) अभिव्यक्तिश्च।

निष्पत्तिशब्दस्य एनानेव चतुरोऽर्थान् गृहीत्वा साहित्यशास्त्रजुषां विदुषां ये चत्वारो वादाः प्राकाश्यमायाताः सन्ति, ते इमे सन्ति—

(१) रसोत्पत्तिवादः,
(२) रसानुमितिवादः,
(३) रसोपभुक्तिवादः,
(४) रसाभिव्यक्तिवादश्च।

एतेषु वादेषु रसोत्पत्तिवादस्य भट्टलोल्लटाचार्यः, रसानुमितिवादस्य आचार्यशङ्कुकः, रसोपभुक्तिवादस्य आचार्यभट्टनायकस्तथा रसाभिव्यक्तिवादस्य श्रीमदाचार्याभिनवगुप्तो मुख्यो निरूपको मन्यते। व्यञ्जनानुयायिनः आनन्दवर्धन-मम्मट-विश्वनाथ-जगन्ना-

थादयोऽपि विख्याताः काव्यशास्त्राचार्या रसाभिव्यक्तिवादमेव परिपुष्णन्तीति तत्तद्ग्रन्थविदां विदितमेव ।

भरतमुनिविरचिते नाट्यशास्त्रे श्रीमदभिनवगुप्तपादाचार्यविरचितायाम् 'अभिनवभारती' नामिकायां सुविख्यातायां टीकायामयं सर्वो विषयो विशदरूपेण व्याख्यातो लभ्यते। वाग्देवतावतारेण मम्मटाचार्येण ततः सारसर्वस्वभूतं समस्तमंशजातमादाय स्वीये काव्यप्रकाशे महतार्जवेन अशेषोऽयं विषयो विशदतरीकृतोऽस्ति। अत्राहं रसनिष्पत्तिबोधप्रतिपत्तये इमांश्चतुरोऽपि रसनिष्पत्तिविषयकान् वादान् क्रमेणोपस्थापयामि । यथा—

उत्पत्तिवादः

ननूक्तमेव प्राग्यदस्य वादस्य जन्मदाता भट्टलोल्लटो विद्यते। मम्मटस्य शब्देषु एतस्य तात्पर्यमस्ति यद्—

"विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः रत्यादिको भावो जनितः, अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः, व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये, तद्रूपतानुसन्धानान्नर्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लटप्रभृतयः।"

समीक्षा

भट्टलोल्लटसम्मतेऽस्मिन् मते केचिद् दोषा दुर्वारा एव सन्ति। प्रथमो दोषस्त्वयमेवास्ति यदतीतकालिके अनुकार्ये रामादौ तु रसोत्पत्तिरङ्गीकृता, तद्रूपतानुसन्धानरूपाभिनयकलाकुशले नटादावपि च गौण्या वृत्त्या रसोत्पत्तिरुररीकृतास्ति, किन्तु सहृदयेन सामाजिकेन क्रियमाणा रसचर्वणा सुतरामुपेक्षितास्ति। अपरश्च दोषोऽस्ति यदजीविते अनुकार्ये रामादौ रसोत्पत्तिः कथङ्कारं भवितुमर्हति? कथमपि नेति मम भावः। एवमेव च स्थायिभावरूपेण पूर्वत एव विद्यमानस्य अव्यक्तावस्थामापन्नस्य रसस्य उत्पत्तिकथनमपि हृदयङ्गमं नैव भवति। अत एव भट्टलोल्लटाशयं स्वीकर्तुं मामकीनं मनो नैव कामयते।

अनुमितिवादः

इदं विदितचरमेव यदस्य पक्षस्य प्रबलपोषकः शङ्कुकोऽस्ति। अयं मन्यते यदभिनयनैपुणीनिष्णातोऽभिनेता काव्यानुसन्धानबलादभ्यासबलाच्च सम्प्राप्तेन स्वकौशलेन कृत्रिमानपि विभावानुभावव्यभिचारिभावान् स्वाभाविकानिव प्रकाशयति। एवञ्च सहृदयो दर्शकः सम्यङ्-मिथ्या-संशय-सादृश्य-प्रतीतिभ्यो विभिन्नया विलक्षणया च प्रतीत्या गम्यगमकभावरूपात् संयोगात् अभिनयकलाकौशलबलात्तस्मिन्नभिनेतरि अविद्यमानमपि रत्यादिस्थायिभावम् अनुमिनोति, तथा स्ववासनाबलेन स्वकीयेऽपि चित्ते तस्यानुमितिं करोति यद् 'अयं दुष्यन्तः शकुन्तलाविषयकरतिमान् तत्र विलक्षणस्मितकटाक्षादिमत्त्वात्', अथवा 'इयं शकुन्तला दुष्यन्तविषयकरतिमती तत्र विलक्षणस्मितकटाक्षादिमत्त्वात्' इति।

समीक्षा

यद्यप्यत्र शङ्कुकेन सामाजिकेऽपि रसानुमितिरङ्गीकृतास्ति, तथापि तत्र कृत्रिमताया दुर्वारणमावरणम् अवशिष्टमस्ति। एवञ्च केनाप्यनुमानेन प्रत्यक्षात्मकं ज्ञानं सम्भवमपि नैव भवति। अनेन तु परोक्षात्मकमेव ज्ञानं जायते। किन्तु रसः साक्षाद् भासमानो भवति। अत एवानुमानेन रसानुमितिरपि विश्वसनीया नास्ति। अस्याञ्चाविश्वसनीयतायां कृत्रिमताबाहुल्यमपि प्रबलं प्रमाणमस्तीति शङ्कुकस्य मते समादरो नास्ति सुकरः।

उपभुक्तिवादः

अस्मिन् मते भट्टनायकस्याग्रहोऽस्तीति भवतां विज्ञातचरमेव। अस्याशयोऽस्ति यद् रसो न ताटस्थ्येनोत्पद्यते, नवानुमीयते, न चात्मगतत्वेनाभिव्यज्यते। अपितु अभिधालक्षणावृत्तिव्यापारानन्तरं विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण व्यक्तिविशिष्टभावनानिरसनपुरस्सरं सर्वसाधारणीक्रियमाणः रत्यादिस्थायिभावः सहृदयैः सामाजिकैः सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसदृशेन भोजकत्वव्यापारेण भुज्यते, अर्थात् आस्वादविषयोविधीयते।

**समीक्षा**

यद्यपि भट्टनायकेन सामाजिकेषु रसनिष्पत्तिप्रक्रियाया विश्लेषणं महता वैशद्येन नैपुण्येन च प्रतिपादितमस्ति; एतदर्थं च तेन या साधारणीकरणप्रक्रिया गवेषिता, सापि सर्वथा प्रशंसनीया समभिनन्दनीया चास्ति। परवर्त्तिभिराचार्यैः सा प्रक्रिया स्वाभिमतरसनिष्पत्तिप्रतिपत्तये उररीकृतापि विद्यते। किन्तु तेनास्मिन् प्रकरणे भावकत्व-भोजकत्वनामानौ यावुभौ शब्दव्यापारावङ्गीकृतौ स्तः, तौ काव्यशास्त्राचार्यसंसारे क्वापि मान्यौ नैव स्तः। अत एव निराधारयोस्तयोर्व्यापारयोराधारमादाय गवेषितेयं भुक्तिवादिनी रसनिष्पत्तिसरणिः पूर्वोक्तलोल्लटशङ्कुकसम्मतरसनिष्पत्तिसरण्यपेक्षया सुष्ठुतरापि सती निराधारत्वादेव काव्यशास्त्रविदां समाजे मान्या भवितुं न पारयामास।

**अभिव्यक्तिवादः**

एतदपि विज्ञातचरमेव भवतां यदस्य पक्षस्य प्रस्तोता श्रीमदभिनवगुप्तपादाचार्यो विद्यते। तदीयावधारणास्ति यद्रसो नोत्पद्यते, नानुमीयते, न चोपभुज्यते; यतोहि सोऽभिव्यज्यते विभावादिभिः। तदीयोऽभिप्रायोऽस्ति यत्सहृदयस्य सामाजिकस्य मनोभूमौ पूर्वानुभूतवासनारूपेण संस्थितो मनःसंवेगाकारो रत्यादिनामा स्थायिभाव एव तन्निष्ठायां रसानुभूतौ निमित्तं भवति। सामाजिकस्य मनसि संस्काररूपेण संस्थितो रत्यादिः स्थायिभावो व्यक्तिविशेषसम्बन्धपरिहारपुरस्सरं सर्वसाधारण्येन प्रतीतैर्विभावादिभिरुद्बोधमापद्य समभिव्यज्यमानश्च सामाजिके आत्मीयत्वेन अमन्दानन्दसन्दोहजननीं शृंगारादिरसानुभूतिं वितनोति।

अर्थात् सर्वप्रथमं तु नटस्य अभिनयकलाकौशलेन प्रदर्श्यमानेभ्यो विभावादिभ्योऽनुक्रियमाणरामादिव्यक्तिविशेषसम्बन्धसंस्कारो लुम्पति। तदनन्तरं सर्वसाधारण्येन प्रतीतेषु तेषु विभावादिषु सामाजिकस्य आत्मभावो जायते। तदानीं सहृदयस्य सामाजिकस्य हृदयात् प्रदर्श्यमानविभावादिव्यतिरिक्तं समस्तमपि सांसारिकं भावजातं पदार्थजातं च विगलितं भवति; स तदानीमात्ममुग्धो बोभवीति। तस्मिन्नेव चात्मनिष्ठमुग्धतासमये सामाजिकस्य मनसि

सर्वतो लब्धविस्तरोऽभिव्यक्तश्च रत्यादिस्थायिभावश्चर्व्यमाणैक-प्राणो विभावादिजीवितावधिः, प्रपाणकरसन्यायेन आस्वाद्यमानः, पुरः परिस्फुरन्निव, हृदयं प्रविशन्निव, सर्वाङ्गाणि ऽसमालिङ्गन्निव, अन्यत्सर्वं विस्मारयन्निव, ब्रह्मानन्दमनुभावयन्निव, अलौकिक-चमत्कारं जनयन्निव शृंङ्गारादिको रसो वोभूयते।

समीक्षा

वस्तुतोऽस्मिन् अभिव्यक्तिवादे रसनिष्पत्तौ सर्वाङ्गीणं सार्वजनीन च विचारं विधाय श्रीमदभिनवगुप्तपादाचार्येण सामाजिकैर्विधीय-मानाया आत्मनिष्ठाया रसानुभूतिरूपायाः काव्यानन्दानुभूतिसरणेः सरलः सत्यः श्रेष्ठश्च पन्थाः प्रदर्शितोऽस्ति। रसस्य अलौकिकता शाश्वतता चापि सुस्थिरीकृते स्तः। सामाजिकानां चेतोभूमौ प्रव-हन्त्या रसरूपानन्दवारिवाहिन्या उद्गमप्रकारोऽपि सुतरां साधुतया स्वाभाविकतया च निरूपितोऽस्तीत्यत्र केषामपि साम्प्रतिकानां शेमु-षीजुषां विदुषां विवादो नावलोक्यते। यतोहि वाग्देवतावतारेण मम्मटाचार्येण काव्यप्रकाशे, विश्वनाथेन साहित्यदर्पणे तथा पण्डित-राजेन जगन्नाथेन स्वीये रसगङ्गाधरे श्रीमदभिनवगुप्तपादाचार्य-चर्चितो रसनिष्पत्तिविषयकोऽभिव्यक्तिवाद एव समर्थितोऽस्तीति तद्विदां विज्ञातमेव।

उपसंहारः

इत्थमहं पश्यामि यद् भरतमुनिप्रणीतस्य रससूत्रस्य चतुर्ष्वपि व्याख्यानेषु श्रीमदभिनवगुप्तपादाचार्यकृतं रसाभिव्यक्तिवादरूपं तुरीयं व्याख्यानमेव सर्वश्रेष्ठमस्ति। यतोहि अस्मिन्नेव व्याख्याने सामाजिकानां चित्तभूमौ समुद्गतायाः सम्प्राप्तविस्तरायाश्च काव्य-रसधारायाः समीचीनतमा मनोरमा च प्रक्रिया मम लोचनगोचरी-भवति। अन्येषु त्रिष्वपि व्याख्यानेषु एतादृशी उपादेयता, सरलता, प्रामाणिकता, सुष्ठुता च नैव लभ्यते। अतोऽहमपि स्वानुभूतिजन्य-धारणया अभिव्यक्तिवादमेव हृदयेन समर्थयामीति विदितवेदि-तव्येषु समधिगतयाथातथ्येषु भवादृशेषु काव्यविद्याविद्वद्वरेषु अलं पल्लवितेनेति धियात्रैव विषयव्याख्यानविस्तराद् विरमामि।

## व्यञ्जना-विवेचना

### भूमिका

रसालोद्याने पिककजनस्य, वसन्तसमये मिलिन्दगुञ्जनस्य, पुष्पे सौरभस्य, क्षीरे नवनीतस्य, सलिले तरङ्गस्य, चन्द्रे सुधायाः, उषसि अरुणतायाः, मुक्तासु भासुरतायाः, वर्षासु च मयूरलीलाया यादृङ्-महत्त्वं मन्यते मनीषिभिः, तादृशमेव काव्ये काव्यक्षेत्रे वा व्यञ्जना-वृत्तेरपि सहृदयधौरेयैः समालोचकैरुररीविधीयते । अहं चिन्तयामि यद् वाग्व्यवहारक्षेत्रे प्रायेण अभिधा-लक्षणा-तात्पर्याख्या-व्यञ्जना-इतिसंज्ञिकाश्चतस्रः शब्दवृत्तयो लब्धप्रसराः सन्तीति सर्वे एव साहित्यशास्त्रविदो विदन्ति । यद्यप्यत्र परिसंख्याता व्यञ्जनाति-रिक्ता अभिधा-लक्षणा-तात्पर्याख्या इतरा अपि शब्दवृत्तयो निजं निजं महत्त्वं धारयन्त्येव, किन्तु सहृदयस्य चेतसि यावतीं चमत्कृतिम्, यावतीं सरसरसप्रवाहपद्धतिम्, यावतीञ्च अमन्दानन्दसन्दोहसन्तति व्यञ्जनावृत्तिर्जनयति, तावतीं नान्या काचिदपीतरा शब्दवृत्तिरिति प्रत्यक्षमेव सुधियामिति मन्ये । अत एव च श्रीमता आनन्दवर्धना-चार्येण स्वीये ध्वन्यालोके लिखितमप्यस्ति यत्—

"प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥"

प्रतीयते यदस्या एवोक्तेर्भावमादाय पाश्चात्यविपश्चित्पोपोऽपि प्रतिपादितवानस्ति यद्—

"In wit, as nature, what affects our hearts
Is not the exactness of peculiar parts;
It is not a lip, or eye, we beauty call
But the joint force and full result of all."

परिभाषा

सहृदयजनानां चोरित (आप्यायित) चित्तवृत्तेः ध्वनिप्रसूतेः व्यञ्जनावृत्तेः परिभाषां प्रकुर्वता ध्वनिकृता श्रीमता आनन्दवर्धनाचार्येणालेखि स्वकीये ध्वनिग्रन्थे ध्वन्यालोके ध्वनिकाव्यनिरूपणकाले यद्—

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥"

अर्थात् यत्र काव्ये वाच्यार्थो लक्ष्यार्थो वा एवमेव वाचकशब्दो लक्षकशब्दो वा स्वकीयं स्वरूपं गौणं कृत्वा किमप्यन्यदेव वाचामगोचरानन्दजनकं विलक्षणमर्थजातं प्रकाशयति, तत्र व्यञ्जनावृत्तिरेव लब्धास्पदा मन्तव्येति मनीषिणां तत्त्वग्राहिणां सूरिणामाशयः । ध्वनिकारस्याशयोऽस्ति यद् व्यञ्जनावृत्तिः कवितावत् शब्दार्थनिष्ठा भवति । यतोहि यत्र चमत्कारजनकता प्रधानतया शब्दे विश्राम्यति, तत्रार्थः सहायको भवति; यत्र च सार्थे प्राधान्येन विराजते, तत्र शब्दः सहायको भवति । अत एव तेनास्यां कारिकायां 'यत्रार्थः शब्दो वा' इत्युक्त्वा शब्दार्थयोरुभयोरपि नामग्रहणं कृतमस्तीति स्पष्टमेव ।

वाग्देवतावतारेण मम्मटाचार्येणापि ध्वनिकाराशयमादाय स्वीये काव्यप्रकाशे निम्नलिखितासु यथास्थानं कथितासु कारिकासु व्यञ्जनास्वरूपं प्राकाश्यमानीतमस्ति । तद्यथा—

"यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥
अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥
तद्युक्तो व्यञ्जकः शब्दो यत्सोऽर्थान्तरयुक् तथा ।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥
वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ॥
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।
शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ॥
अर्थस्य व्यञ्जकत्वे तत् शब्दस्य सहकारिता ।"

साहित्यदर्पणकारो विश्वनाथोऽपि अभिधाद्याः सर्वाः शब्दवृत्तीरतिक्रम्य प्रवर्तमानायाः व्यञ्जनायाः व्यवस्थिततरं स्वरूपं निरूपयन् लिखति—

"विरतास्वभिधाद्यासु ययार्थो बोध्यते परः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥

'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयेनाभिधालक्षणातात्पर्याख्यासु तिसृषु वृत्तिषु एवं स्वं स्वमर्थं बोधयित्वोपक्षीणासु यया अपरोऽन्योऽर्थो बोध्यते, सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च शक्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम। तत्र—

अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा।
अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ॥
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया।
लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ॥
यया प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया।
वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः ॥
प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च।
वैशिष्ट्यादन्यमर्थं या बोधयेत्सार्थसम्भवा ॥
शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥"

उदाहरणानि

व्यञ्जनावृत्तेरुदाहरणक्षेत्रं सत्कविकृतं विविधं सकलं काव्योद्यानं विद्यते। किन्त्वत्र निदर्शनरूपेण स्थालीपुलाकन्यायेन कतिपयान्येव व्यङ्ग्यार्थपरिमलमिलितानि सहृदयचित्तचञ्चरीकचुम्बितानि पद्यप्रसूनानि ततः समवचित्य भवतां नयनोपायनीकरोमि। दृश्यतां तावत्प्रथमं पद्यकुसुमम्—

'एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती ॥"

अस्मिन् पद्ये महाकविकालिदासः स्वप्रेयांसं शिवं समुद्दिश्य पितुः पार्श्वे स्थितायाः अपि पार्वत्याः हृदये समुत्पद्यमानान् हर्ष-व्रीडौत्सुक्यादीन् सञ्चारिणो भावान् पार्वतीकर्तृकमुखाधोविधानपूर्वकलीलाकमलपत्रसंख्यानरूपानुभाववर्णनव्याजेन शिवविषयिणीं पार्वतीनिष्ठां रतिं च महत्या शालीनतया अभिव्यक्तवानस्ति, इति सर्वेषामेव सहृदयानां प्रत्यक्षम् । एवमेव—

'वणिजक ! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्लुलितालकमुखी गृहे परिष्वङ्क्ते स्नुषा ॥'

इत्यत्र पुत्रस्य स्वकान्तायाम् आसक्त्यातिशय्यस्य तज्जन्यदौर्बल्यस्य च तेन च तदीयस्य हस्तिव्याघ्रादिवधासामर्थ्यस्य प्रकटनप्रकारः सहृदयानां हृदयप्रीतये सुतरामलमस्तीत्यत्र न संशयः ।
किं बहुना—

'अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि ! त्वरितम् ।
श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम् ॥'

'नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्यायां भवति नवा भवति विश्रामः ॥'
'पथिक ! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद् वस ॥'

इत्यादिषु व्यङ्ग्यार्थगर्भेषु पद्येषु निर्बाधं प्रसरन्तीं सहृदयहृदयं प्रविशन्तीं व्यञ्जनावृत्तिमाधुरीं सहृदयाः सुमेधसो नूनं जानन्त्येव ।

**व्यञ्जनाया अनिवार्यता**

काव्यक्षेत्रे व्यञ्जनावृत्तिरनिवार्या वरीवृत्यते, इत्यभिप्रायः आनन्दवर्धन-अभिनवगुप्त-मम्मट-विश्वनाथ-जगन्नाथप्रभृतीनां सर्वेषामेव ध्वनिपोषकाणां काव्यशास्त्राचार्याणां विद्यते, यो नूनं सर्वाधिको मनोरमः । वस्तुतो हि काव्यस्य वास्तविकमर्मविबोधं प्रस्तोतुं ननु अभिधावृत्तिः समर्थास्ति, न वा लक्षणावृत्तिः, न वा च तात्पर्याख्या वृत्तिः । तदर्थन्तु व्यञ्जनावृत्तिरेपणीया एव भवति । यतोहि अविवक्षितवाच्यस्य विवक्षितवाच्यस्य वा कस्यापि काव्य-

भेदस्य वास्तविकः काव्यार्थो व्यञ्जनां विना नोपपद्यते यथा—

(कः) अविवक्षितवाच्यार्थेषु लक्षणामूलकध्वनिकाव्येषु व्यञ्जनां विना तत्र लक्षणा एव कुलक्षणा भूत्वा असंगच्छते।

(खः) विवक्षितवाच्यार्थेषु असंलक्ष्यक्रमव्यङ्ग्येषु अभिधामूलकध्वनिकाव्येषु तु रसादिरूपो वास्तविकोऽर्थः स्वप्नेऽपि अभिधया वाच्यो न भवति। एतदर्थन्तु व्यञ्जना अङ्गीकार्या एव भवति।

(गः) एवमेव विवक्षितवाच्यार्थेषु संलक्ष्यक्रमव्यङ्ग्येष्वपि अभिधामूलकध्वनिकाव्येषु कुमारिलभट्टस्य अभिहितान्वयवादे तु अभिधा पदार्थबोधे एव प्रभवति, तदग्रे तु सा कुण्ठिता भूत्वा वाक्यार्थबोधाय असमर्था जायते। तदर्थन्तत्र तात्पर्याख्या वृत्तिः तस्या साहाय्यमाचरति। एवं सति व्यङ्ग्यार्थरूपवास्तविककाव्यार्थबोधकरणाय प्रागेव विशेषणे क्षीणशक्तिः सा वराकी अभिधा पुनः कथङ्कारं प्रभवेत् ? कथमपि नेति भावः।

एवञ्च प्रभाकरभट्टस्य अन्विताभिधानवादेऽपि अभिधावृत्तिः अन्वितं केवल सामान्यविशेषरूपमेव अर्थं बोधयितुं पारयति; तत्रापि सामान्यविशेषरूपादर्थात् परं व्यक्तिविशेषरूपमतिविशेषभूतं वाक्यार्थं सा नैव बोधयितुं प्रभवति। अतस्तस्मादतिविशेषभूतादपि वाच्यार्थात्परं प्रवर्त्तमानो व्यङ्ग्यार्थरूपो वास्तविकः काव्यार्थस्तु तया कथमपि नैव बोधयितुं शक्यते।

(घः) 'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इति प्रजल्पताम् अभिधया एव व्यङ्ग्यार्थप्रतीतिमिच्छतां भट्टलोल्लटादीनामपि मतं भ्रान्तिजनकं विद्यते। यतोहि तथा स्वीकृते सति तु लक्षणा एव नश्यति। अतः सुतरां सिद्ध्यति यदभिधया व्यञ्जनावृत्तिकार्यं कथमपि कदापि च कर्त्तुं नैव शक्यते।

अथायान्ति केचिल्लक्षणाभक्ताः। इमे कथयन्ति यल्लक्षणया एव व्यङ्ग्यार्थप्रतीतिरपि कर्त्तुं शक्यते; अतस्तदर्थं व्यञ्जना नावश्यकी। किन्तु एषामपीदं कथनं विवेकशून्यमेव विद्यते। यतोहि व्यञ्जना तु लक्षणामप्यतिशेते। वाग्देवतावतारो मम्मटाचार्यः स्वीये

काव्यप्रकाशे लक्षणावृत्तिमप्यतिक्रम्य प्रवर्तमानायाः व्यञ्जनावृत्तेः सिद्धिकरणाय युक्तयुक्तीः काश्चित् कारिका अपि लिखितवानस्ति। यथा—

"यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया॥
नाभिधा समयाभावाद् हेत्वभावान्न लक्षणा।
लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो॥
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः।
एवमप्यनवस्था स्याद् या मूलक्षयकारिणी॥
प्रयोजनेन सहितं लक्षणीयं न युज्यते।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्॥
विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु लक्षिते॥"

इत्येतासु कारिकासु तथा—"तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्य-लक्षणाभ्यो व्यापारान्तरेण गम्याः। तच्च व्यञ्जन-ध्वनन-द्योतनादिशब्दवाच्यमवश्यमेषितव्यम्।" इति वृत्तिभागे च सः सुतरामेव स्पष्टरूपेण 'गङ्गायां घोषः' इतिकाव्यवाक्ये शैत्य-पावनत्वप्रतीतिरूपव्यङ्ग्यार्थलाभाय लक्षणामक्षमां मत्वा तदग्रे धाराप्रवाहेण प्रसरन्तीं व्यञ्जनावृत्तिं महता नैपुण्येन प्रतिपादया-मासेति प्रत्यक्षमेव विपश्चिताम्।

एवमेव ध्वनिकारेण आनन्दवर्धनाचार्येणापि अभाववादिनामिव लक्षणावादिनामप्यशेषाणामाचार्याणामशेषाः संकल्पविकल्पाः स्वीये ध्वन्यालोके भृशं युक्तयुक्तिपुरस्सरं विखण्डिताः सन्ति। साहित्यदर्पणकारो विश्वनाथोऽपि—

"वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम्।
अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम्॥"

इत्यभिधाय अभिधातात्पर्यलक्षणावृत्तिषु विद्यमानास्वपि व्यञ्जनावृत्तेरनिवार्यतामपरिहार्यताञ्च महत्या प्रतीत्या प्रतिपादित-वानस्तीत्यपि सर्वेषामेव साहित्यशास्त्रसेविनां मेधाविनां विदितमेव।

### अथानुमानवादखण्डनम्

आचार्यमहिमभट्टेन स्वीये व्यक्तिविवेके अनुमानेन एव व्यङ्ग्यार्थ-प्रतीतिमुररीकृत्य व्यञ्जनाया अनावश्यकतां संसाधयितुं चेष्टा कृतास्ति । अत एव च—

> "भ्रम धार्मिक ! विश्रब्धः स शुनकोऽद्य मारितस्तेन ।
> गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥"

इति पद्ये स भ्रमणनिषेधं व्यञ्जनाबोध्यं न मत्वा अनुमान-बोध्यमेव मन्यते । किन्तु मम्मटाचार्येण महता प्रौढिम्ना एतत्संसाधि-तमस्ति यदनुमानेन व्यञ्जनायाः कार्यं कथमपि नैव भवितुं शक्नोति । वस्तुतोऽस्मिन् पद्ये महिमभट्टसम्मतस्य अनुमानस्य प्राणभूतो यः सिंहोपलब्धिरूपो हेतुरस्ति, स न केवलमनैकान्तिकः, अपितु विरुद्धो-ऽसिद्धश्चापि विद्यते । यतोहि गुरोः प्रभोर्वा निदेशेन, कान्तानुरागेण च तादृशे भयकारणे सत्यपि भीरुस्तत्र भ्रमत्येव, इत्यनेकान्तता तत्र सिद्ध्यति । एवमेव शुनो बिभ्यदपि शूरत्वेन सिंहान्नापि बिभीयादिति विरुद्धतापि तत्र विद्यते । अभिसारिकावाक्याच्च गोदानदीतीरे सिंह-सत्तापि न प्रामाणिकी, अतस्तत्रासिद्धतापि दरीदृश्यते हेतौ । अनेन कारणेन अस्मिन् पद्ये एवंविधाद् हेत्वाभासाद् हेत्वभावाच्च भ्रमण-निषेधरूपसाध्यसिद्धिः अनुमानेन नितरामेव असम्भवास्तीत्यत्र सहृदयानामेकमत्यमेव वरीवृत्यते ।

### उपसंहारः

साम्प्रतमहं प्रत्येमि यदेतावता विवेचनेन एतन्नितरां स्फुटं भूतं भवेद यद् व्यञ्जनावृत्तिः अभिधादिभ्यः सर्वाभ्य एव इतरशब्द-वृत्तिभ्यो महिष्ठा, गरिष्ठा, श्रेष्ठा च वर्तते तथा एतस्याः कस्याञ्चि-दपीतरशब्दवृत्त्यामन्तर्भावो नैव भवितुं शक्नोति । एतस्मादेव कार-णात् इयमेवास्ति काव्यस्य चरमसीमा, ब्रह्मानन्दसहोदरानन्दसरो-वरस्य पराकाष्ठा, परमाह्लादस्य च निवासभूमिः; एनां विना काव्यं प्राणहीनं शरीरमिव अहृद्यं बोभूयते । अत एव रसप्रधाने समस्ते एव साहित्ये एतस्याः वाचामगोचरो महान् महिमा सहृदयानां लोचन-गोचरतामायाति । अत एव उक्तमप्यस्ति यद्—

'व्यङ्ग्यप्रधानाभिनवैव भङ्गी
मुख्यार्थबाधः परमः प्रकर्षः।
वक्रोक्तयो यत्र विभूषणानि
सा काचिदन्या सरणिः कवीनाम् ॥"

इत्थं हि सहृदयजनमनोरञ्जनायाः व्यञ्जनायाः परमैश्वर्यं दर्शं दर्शं प्रायेण अधुनातनैः निखिलैरेव धीधनैः सहृदयैः कविजनैः समीक्षकजनैश्च व्यञ्जना सानन्दमङ्गीक्रियते, इतीरयित्वा 'अलं विद्वत्सु भृशं पल्लवितेन' इति धिया समयाभावभिया च अत्रैव विरमामि विस्तरात्।

## गुणालङ्कारभेदमीमांसा

माधुर्यादिषु गुणेषु उपमादिषु चालङ्कारेषु भेदो वर्त्तते नवेति विषयमादाय बुधेषु भूयान् विवादो विद्यते । अस्मिन् विषये श्रीभामह-भट्टोद्भट-वामन-आनन्दवर्धन-मम्मटादिभिः अनेकैरालङ्कारिकैः विमर्शो विहितोऽस्ति । सर्वप्रथममहं ध्वन्यालोककारस्य श्रीमदानन्द-वर्धनाचार्यस्य अभिप्रायं प्रदर्शयामि । स लिखति ध्वन्यालोके द्वितीयो-द्योते षष्ठ्यां कारिकायाम्—

"तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत् ।।"

अयमाशयो यत् लोके यथा शौर्यादयो गुणाः समवायसम्बन्धेन आत्मानमेव समाश्रयन्ते, तथैव काव्ये अङ्गित्वेन (प्राधान्येन) राज-मानं रसमेव ये अवलम्बन्ते, ते माधुर्यादयो गुणाः सन्ति । एवञ्च लोके यथा कटककुण्डलादयोऽलङ्काराः संयोगवृत्या शरीरस्य अवय-वानेव आश्रयन्ते, तथैव काव्ये अङ्गत्वेन दृश्यमानं शब्दमर्थमेव वा ये समाश्रयन्ते, ते उपमादयोऽलङ्कारा मन्यन्ते । एवं रीत्या गुणालङ्का-रयोःस्पष्टं पार्थक्यं प्रतिपादयता श्रीमता तत्रभवता आनन्दवर्धना-चार्येण निर्णीतमस्ति यद्—

१ माधुर्यादयो गुणाः रसधर्माः भवन्ति ।
२ अनुप्रासोपमादयोऽलङ्कारा शब्दार्थधर्माः सन्ति ।
३ अतः आश्रयभेदेन गुणालङ्कारयोः भेदो दुर्वार एव ज्ञेयः ।

**अभेदवादिनो भट्टोद्भटस्य मतम्**

भट्टोद्भटेन स्वविरचिते भामहविवरणे प्रतिपादितमस्ति यद् गुणालङ्कारयोः कश्चिद् भेद एव नास्ति । तस्यायमाशयोऽस्ति यत् समवायवृत्त्या आत्मनि तिष्ठन्तः शौर्यादयोगुणाः, संयोगवृत्त्या च अवयवेषु स्थानं लभमानाः कटककुण्डलादयोऽलङ्काराः

यथा आश्रयभेदेन भिन्नभिन्ना: मन्यन्ते, तथैव समवाय-वृत्त्या रसे वसन्तो माधुर्यादयो गुणा:, संयोगवृत्त्या च शब्दार्थेषु वसन्तोऽनुप्रासोपमादयोऽलङ्कारा अपि भिन्नभिन्ना: मन्तव्या: इति चेत्कश्चिद् गुणालङ्कारभेदवादी वदेत्, तर्हि तन्न स्वीकरणीयमस्ति। यतोहि लौकिकेषु शौर्यादिषु गुणेषु तथा कटककुण्डलादिषु अलङ्कारेषु आश्रयभेददर्शनात् जगति भवतु नाम तावद् भिन्नत्वम्; किन्तु काव्य-जगति प्रसिद्धानां माधुर्यादिगुणानां तथा अनुप्रासोपमादीनामल-ङ्काराणाम् उभयेषामपि समवायवृत्त्यैव काव्ये अवस्थानात् तेषु भेद-बुद्धिर्नैव करणीया। पुनरपि यदि कोऽपि भेदं पश्येत्, तर्हि गड्डलि-काप्रवाहेणैव तदीया सा भेदबुद्धिरस्ति। अतस्सा आदरणीयतां नार्हति।

**भेदवादिवामनाचार्यमतम्**

श्रीमता वामनाचार्येण महता विस्तरेण गुणालङ्काराणाम् अव-स्थिति: पृथक्-पृथक् निर्धारितास्ति। स लिखति स्वकीयस्य काव्या-लङ्कारसूत्रस्य तृतीयाधिकरणे प्रथमाध्याये—

१-"काव्यशोभाया: कर्त्तारो धर्मा. गुणा:" (३।१।१)।
२-"तदतिशयहेतवस्त्वलङ्कारा:" (३।१।२)।
३-"पूर्वे गुणा नित्या:" (३।१।३)।

श्रीवामनाचार्यस्य आशयोऽस्ति यद् यै: शब्दार्थधर्मै: काव्यशोभा उत्पद्यते ते माधुर्यादयो गुणा एव सन्ति, न तु ते कदापि अनुप्रासो-पमादयोऽलङ्कारा भवन्ति। यतोहि अलङ्कारास्तु काव्यशोभायाम् आधिक्यमात्रं सम्पादयन्ति; तां शोभामुत्पादयितुं तु गुणा एव क्षमन्ते। न केवलं तावदेतावदेव, अपितु माधुर्यादीनां गुणानां काव्ये अनिवार्या स्थितिर्भवति। यतोहि तान् विना काव्यशोभा एव न भवति। किन्तु अलकाराणां प्रयोगस्तु नितरामैच्छिको भवति। यतोहि अलङ्कारा-णाम् अभावेऽपि काव्यशोभा न क्षीयते।

तन्मतस्य अयं सार:—

१-गुणा: काव्यशोभाविधायका स्वरूपाधायका वा भवन्ति।
२-अलङ्कारास्तु केवलम् उत्कर्षाधायका भवन्ति।

३-काव्ये गुणाः अपरिहार्याः भवन्ति ।

४-काव्ये अलङ्काराः ऐच्छिकाः भवन्ति।

**अथ श्रीमम्मटाचार्यमतम्**

ध्वन्यालोककारस्यैव मतं समर्थयमानेन श्रीमम्मटाचार्येण भट्टोद्भटस्य अभेदपक्षस्तु नितरां खण्डितोऽस्ति; सहैव 'काव्यशोभायाः कर्त्तारो धर्माः गुणाः' इति सूत्रे वामनाचार्यप्रतिपादितं गुणानां काव्यशोभाकर्त्तृत्वमपि प्रत्याख्यातमस्ति । किन्तु 'पूर्वे गुणा नित्याः' इति सूत्रे वामनाभिमतं गुणानां नित्यत्वं सहर्षमङ्गीकृतमस्ति । स लिखति स्वीये काव्यप्रकाशे अष्टमोल्लासे—

**"ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥"**

किन्तु—

**"उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥"**

**गुणविषये तदाशयः**

१ गुणाः आत्मनः शौर्यादय इव रसस्यैव धर्माः सन्ति ।

२ गुणाः रसे अचलस्थितयः (अनिवार्याः) तथा उत्कर्षाधायका धर्माः सन्ति ।

३-गुणा वर्णार्थानां धर्मा न भवन्ति । यदि च कदाचिद् भवन्त्यपि, तर्हि गुणवृत्त्या एव भवन्ति ।

**अलङ्कारविषये तदभिप्रायः**

१-अलङ्काराः काव्ये विद्यमानं रसं यदा-कदा उपकुर्वन्ति । यथा—

**"अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ?**
**अलमलमालि ! मृणालैरिति वदति दिवानिशं बाला ॥"**

इत्यादौ वाचकमुखेन, तथा

**"मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं**
**प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।**

हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ।।"

इत्यादौ वाच्यमुखेन अलङ्कारौ रसमुपकुरुतः।

२-अलङ्काराः काव्ये विद्यमानं रसं यदा-कदा नाप्युपकुर्वन्ति यथा—

"चित्ते विघट्टते न त्रुट्यति सा गुणेषु
शय्यासु लुठति विकसति दिङ्मुखेषु ।
वचने वर्त्तते प्रवर्त्तते काव्यबन्धे
ध्याने न त्रुट्यति चिरं तरुणी प्रगल्भा ।।"

स्पष्टमस्ति यदत्रत्योऽनुप्रासः शृंङ्गारं न पुष्णाति ।

३-अलङ्काराः काव्ये रसाभावात् केवलम् उक्तिवैचित्र्यहेतवो भवन्ति । यथा—

"मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति,
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता,
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ।।"

अस्मिन् पद्ये विद्यमाना उपमा उक्ति-वैचित्र्यमेव सम्पादयति; प्रकृते विप्रलम्भशृंगारे तु सा प्रातिकूल्यमेव वितनोतीति सहृदयानां प्रत्यक्षमेव ।

४-अलङ्काराः सदैव वर्णार्थानां धर्माः भवन्ति ।

५-अलङ्काराः काव्ये अनिवार्याः न भवन्ति ।

एवमुपर्युक्तया युक्त्या गुणालङ्काराणां भेदं स्पष्टीकृत्य भट्टोद्भटस्य अभेदवादिपक्षप्रत्याख्यानपुरस्सरं वामनाचार्याभिमतं 'गुणानां काव्यशोभायाः कर्तृत्वं' खण्डयन् मम्मटो वक्तुकामोऽस्ति यद् यदि वामनानुसारेण गुणा एव काव्यशोभाकारका मन्येरन्, तदा अयमपि प्रश्नः समुदेति यत् 'समस्तैः गुणैः काव्यशोभा भवति, उताहो कतिपयैः ? इति'। यदि च समस्तैः गुणैः काव्यशोभा मन्येत, तर्हि गौड़ी पाञ्चाली च रीती काव्यस्यात्मा नैव भवितुं शक्नुतः। यतोहि अनयोः

सर्वे गुणा न भवन्ति। एवञ्च 'रीतिरात्मा काव्यस्य' इति वामनोक्तमेव नहि संगच्छते। अथ यदि कतिपयैः गुणैः काव्यशोभा अङ्गीक्रियेत, तर्हि 'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः' इत्यत्रापि ओजोगुणस्य विद्यमानत्वात् काव्यत्वं मन्तव्यं भविष्यति, यद् वस्तुतोऽत्र अस्त्येव नहि। विपरीतदशायां तु—

"स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम्॥"

इत्यत्र गुणाभावे सत्यपि काव्यत्वं नयनविषयीभवति। एतस्माद्धेतोः वामनाभिप्रेतं गुणानां काव्यशोभाकर्तृत्वं नितरां निन्दनीयमेव धीधनैरिति श्रीमम्मटाचार्याशयो नास्ति केषामपि शेमुषीजुषामविदितः।

इत्थमहं विविधं विचिन्त्य इममेव निष्कर्षं लभे, यद् ध्वनिकारप्रकाशकारयोरेव कथनं सुसंगतं विद्यते। तदनुसारेण गुणालङ्कारभेदमीमांसां संक्षेपेण प्रस्तौमि—

College, KOTA

| गुणाः | अलङ्काराः |
|---|---|
| १. रसधर्माः। | १. शब्दार्थधर्माः। |
| २. अनिवार्याः। | २. ऐच्छिकाः। |
| ३. सदा रसोत्कर्षकाः। | ३. (क) यदा-कदा रसोत्कर्षकाः। |
| | (ख) यदा-कदा रसापकर्षकाः। |
| | (ग) यदा-कदा उक्तिवैचित्र्यमात्रावहाः। |

सम्प्रति अहं विश्वसिमि यदेतावता विवेचनेन गुणालङ्कारभेदो विशदं स्पष्टीभूतो भवेत्। अतोऽग्रे 'विद्वत्स्वलं पल्लवितेन' इति धिया विस्तराद् विरमामि।

# उपमा कालिदासस्य

कविकुलकमलदिवाकरो निर्जरभारतीभक्त: कविताकामिनी-कान्तो वाणीविलासो महाकविकालिदासो न केवलेऽस्मिन् 'भा'रते भारतवर्ष एव, अपितु सर्वस्मिन् विश्वस्मिन् महता समादरेण संस्मियते, इत्यस्मिन् विषये कस्यापि संसेवितसंस्कृतसाहित्यस्य जनस्य वैमत्यं भवितुं नैव शक्नोति। विद्वांसो विदन्त्येव यदनेन सारस्वतसत्त्वसम्पन्नेन कविवरेण कालिदासेन रघुवंश-कुमारसम्भव-मेघदूत-अभिज्ञानशाकुन्तल-विक्रमोर्वशीय-मालविकाग्निमित्र-ऋतुसंहार संज्ञकानि रसभावादिपरिमलमिलितानि उपमाद्यलङ्काररोचक-रङ्गरञ्जितानि सहृदयचित्तचञ्चरीकचुम्बनार्हाणि काव्यप्रसूनानि निर्माय संस्कृतसाहित्योद्यानस्य अद्यावधि अनुपमा श्रीवृद्धिर्विहिता-स्ति। अत्र काचिदपि संशीतिर्नास्ति यदेतदीयस्यैव साहित्यस्य प्रभावेण विदेशेष्वपि भारतीयसाहित्यस्य महिमा गरिमा च प्रसारं प्राप्तवानस्ति। अभिज्ञानशाकुन्तलं पठित्वा तु गेटेमहोदयो नर्तितुमेव प्रारब्धवानासीत्। एवंगुणगणविशिष्टस्य सकलकविकुलपुङ्गवस्य कालिदासस्य कवितायां रसभावादीनां तु मर्मस्पृक् समवायो विद्यते एव, किन्तु तत्र सहृदयचित्तचमत्कारकाणामलङ्काराणामपि साधी-यान् सन्निवेशो वर्तते। यतोहि कालिदासोऽज्ञासीद् यद् रसभाववती सत्यपि कविताकामिनी यदि समुचितालंकारैरप्यलङ्कृता स्यात्, तर्हि सचेतसां चेतोमोदाय भृशं प्रभवति। मन्ये, अत एवायं रसवादी कविर्भूत्वापि स्वकीयायाः सरसकविताकामिन्याः कोमलां शब्दार्थ तनुलतां समुचितालङ्काराणां ललितसन्निवेशेनापि समलङ्कृताम-कार्षीत्।

यद्यप्ययं महाकविः काव्यशास्त्रानुमोदितानां समस्तानामेव अनुप्रासादीनां शब्दालङ्काराणाम्, उपमादीनामर्थालङ्काराणां च रोचकप्रयोगविधाने सर्वत्रैव स्वीयं कौशलं प्रकटयामास, किन्तु

उपमालङ्कारसन्निवेशे तु एतदीयं कौशलं नूनमेव सर्वश्रेष्ठमस्ति। अस्याः प्रयोगे तु अयं सर्वानेव महाकवीनतिशेतेतमामित्यत्र केषामपि साहित्यजुषां विदुषां विसंव्वादो नास्ति।

अथात्र प्रश्नोऽयमप्युदेति यद् उपमालङ्कारस्य परिभाषा कास्ति। इमं प्रश्नं समाधातुमत्र कतिपयेभ्यः काव्यशास्त्रीयग्रन्थेभ्यः काश्चिदुपमापरिभाषाः प्रस्तूयन्ते। यथाहि—

(कः) "यत्किञ्चित्काव्यबन्धेषु साहृश्येनोपमीयते।
उपमा नाम सा ज्ञेया वर्णाकृतिगुणाश्रया॥" इति भरतस्य,

(खः) "उपमानेनोपमेयस्य गुणलेशतः साम्यमुपमा।" इति वामनस्य,

(गः) "उभयोः समानमेकं गुणादि सिद्धं भवेद्द यथैकत्र।
अर्थेऽन्यत्र तथा तत्साध्यत इति सोपमा त्रेधा॥" इति रुद्रटस्य,

(घः) "विवक्षितपरिस्पन्दमनोहारित्वसिद्धये।
वस्तुनः केनचित्साम्यं तदुत्कर्षवतोपमा॥" इति कुन्तकस्य,

(ङः) "प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः।
भूयोऽवयवसामान्ययोगः सेहोपमा मता॥" इति भोजराजस्य,

(चः) "साधर्म्यमुपमा भेदे" इति मम्मटस्य,

(छः) "स्वतः सिद्धेन भिन्नेन सम्मतेन च धर्मतः।
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा॥" इति विद्यानाथस्य,

(जः) "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः।" इति विश्वनाथस्य,

(झः) "साहृश्यं सुन्दरं वाक्यार्थोपस्कारमुपमालङ्कृतिः" इति च जगन्नाथस्य,

एतासां सर्वासामुपमापरिभाषाणां परिशीलनेन तथ्यमिदं स्फुटति यत्कवीनां काव्यसंसारे एकस्मिन्नेव वाक्ये कविकल्पितम्

उपमानोपमेययोः वैधर्म्यरहितं सुन्दरं वाक्यार्थशोभोत्कर्षाधायकं च सादृश्यमेव उपमालङ्कारपदेनाभिधीयते। एषोपमा कामिनीभाले सिन्दूरबिन्दुरिव कविताकलेवरे शोभमाना मन्यते मनीषिभिः। एवञ्चानेकेष्वलङ्कारेषु उपमाया एव भावभङ्गिमत्वाल्लोके एतद्विषये प्रशंसापुरस्सरम् एतदप्युच्यते यद्—

"उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान्।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः॥" इति॥

अथाग्रे अहमस्मिन् सीमितसमयलेखनीये स्वीये लेखे महाकविकालिदासस्य काव्येषु वरीवृत्यमानं मनीषिभिर्मन्यमानञ्च अनुपमम् उपमावैभवं भवतां पुरस्तादत्र यथामति स्थालीपुलाकन्यायेनोपस्थापयामि। दृश्यतां तद्यथा—

(१) "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥"

यथा वाणी अर्थश्च परस्परं सम्पृक्तौ भवतः, तथैव पार्वती परमेश्वरश्चापि परस्परं संश्लिष्टौ तिष्ठतः। अतो वागर्थवैभवलाभाय जगतः पितरौ तौ पार्वतीपरमेश्वरौ वन्देऽहमितिकालिदासाभिप्रायः। अत्र उपमेययोः पार्वतीपरमेश्वरयोः उपमानाभ्यां वागर्थाभ्यां सहोपमा दत्तास्ति; एवं परस्परं सम्पृक्तीभावस्य साधारणधर्मता तथा इवशब्दस्य उपमावाचकशब्दताप्यत्र स्फुटमेव दरीदृश्येते। तस्मादत्र पूर्णोपमा विराजते।

(२) "तस्याः खुरन्यासपवित्रपांसु—
मपांसुलानां धुरि कीर्त्तनीया।
मार्गं मनुष्येश्वरधर्मपत्नी
श्रुतेरिवार्थं स्मृतिरन्वगच्छत्॥"

येन प्रकारेण स्मृतिः श्रुतेरर्थमनुसरति, तेनैव प्रकारेण मनुष्येश्वरधर्मपत्नी सुदक्षिणा नन्दिन्याः मार्गमनुससार। यद्यप्यत्र सुदक्षिणायाः उपमानं स्मृतिः, नन्दिन्याः उपमानं श्रुतिः, नन्दिनीमार्गस्य चोपमानं श्रुत्यर्थो वर्त्तते, तथापि प्राधान्येन सुदक्षिणाया एव उपमेयता तथा स्मृतेरेवोपमानता प्राकाश्यमानीतास्ति कविना,

यदर्थमनुसरणमुभयोरेव साधारणधर्मत्वेन निरूपितमस्ति, इवशब्दश्चात्र उपमावाचकशब्दत्वेन प्रयुक्तोऽस्ति। अतोऽत्रापि पूर्णोपमायाश्चमत्कारोऽनुभूयते सहृदयैः।

(३) "पुरस्कृता वर्त्मनि पार्थिवेन
प्रत्युद्गता पार्थिवधर्मपत्न्या।
तदन्तरे सा विरराज धेनुर्
दिनक्षपामध्यगतेव सन्ध्या॥"

सुदक्षिणादिलीपयोर्मध्ये विद्यमाना नन्दिनी दिनक्षपामध्यगता सन्ध्या इव शुशुभे। अत्र सुदक्षिणा-दिलीपयोरन्तराले विराजमानायाः पाटलवर्णायाः नन्दिन्याः क्षपा-दिनयोर्मध्यगतया अरुणाभया सन्ध्यया सह कियन्मनोहरं सुन्दरं साम्यमस्तीति नित्यं सायं प्रकृतिप्रेक्षकाः सहृदयाः सुधियः साधु विदन्त्येव। अतोऽस्मिन् पद्ये कवेः सूक्ष्मेक्षिकया प्रस्तुतीकृतोऽयमुपमासन्दर्भो नूनमेव मनीषिणां मनस्तोषाय सुतरामेवालमस्तीति न मे मनागपि विशयः।

(४) "तां सैव वेत्रग्रहणे नियुक्ता
राजान्तरं राजसुतां निनाय।
समीरणोत्थेव तरङ्गलेखा
पद्मान्तरं मानसराजहंसीम्॥"

इन्दुमत्याः स्वयंवरसमये सुनन्दा इन्दुमतीम् एकस्माद् राजकुमाराद् अपरं राजकुमारं निकषा तथैव निनाय, यथा जललहरी मानसराजहंसीम् एकस्मात् पद्मात् अन्यत् पद्मं निकषा नयति। दृश्यतान्तावत्, अत्रापि उपमेयभूतायाः सुनन्दायाः उपमानभूतायाश्च जलतरङ्गलेखायाः प्रापणानुकूलक्रियायां कियत्सुन्दरं साम्यं प्रदर्शितं विद्यते।

(५) "सञ्चारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः॥"

उपर्युदीरिते एव स्वयंवरे स्वैरं स्वैरं परिभ्रमन्त्याः इन्दुमत्याः राजमार्गे रात्रौ सञ्चरन्त्या दीपशिखया, तथैव च रङ्गभूमिमार्गमुभयतः सन्तिष्ठमानानां राजकुमाराणां राजमार्गमुभयतो विद्यमानैः प्रासादैर्यत्साम्यं कालिदासेन समुन्मीलितमस्ति, तत्तु सूक्ष्मेक्षिकावतां विपश्चितां नूनमेव मनोमोदाय कल्पतेतमाम् । अहो ! धन्यास्ति सूक्ष्मनिरूपणनिपुणा विलक्षणा विचक्षणा नवनवोपमानान्वेषणपरायणा च महाकवेः कालिदासस्य दृष्टिः ।

यथा राजपथे रात्रौ प्रयान्ती दीपशिखा पृष्ठत्यक्तेषु प्रासादेषु तिमिरम् (अग्रवर्त्तिषु च ज्योतिष्पुञ्जं) प्रसारयति, सुतरां तथैव स्वयंवरे चरन्तीन्दुमती पृष्ठत्यक्तेषु राजकुमारेषु नैराश्यम् (अग्रवर्त्तिषु च समुत्साहं) विस्तारयामास, इति सुतरामेव स्वभाविकम् । अत एव च यथा राजपथे दीपशिखया यो यः प्रासादः पृष्ठे त्यज्यते, स स तिमिरावृतो भवति; तथैव स्वयंवरे इन्दुमत्या यो यो राजकुमारः पृष्ठे त्यक्तः, स स नैराश्यावृतो बभूवेति कालिदासस्य कथनं कस्य सचेतसश्चेतसि सरसं चमत्कारं नोद्वेलयति ? अहन्तु मन्ये विश्वसिमि च यदेनामुपमामनुभूय सर्वेषामेव सहृदयानां जनानां हृदयानि नितरां प्रसीदन्तीत्यत्र न कस्यापि कापि संशीतिकणिकापि ।

अत्रेदमपि समुल्लेखनीयमस्ति यदस्या एवानुपमाया उपमाया मायायाः प्रभावातिशयेन प्रभावितो भूत्वा समीक्षासंसारो महाकवये कालिदासाय दीपशिखोपाधिमपि प्रदत्तवानस्तीत्यस्माकं कृते महतो मोदस्य विषयः ।

(६) "दिने दिने सा परिवर्धमाना
लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान्विशेषान्
ज्योत्स्नान्तराणीव कलान्तराणि ।।"

अस्मिन् पद्ये बाल्यकाले पितुर्गेहे परिवर्धमानायाः पार्वत्याः उपमा शुक्लपक्षे प्रतिदिनं वृद्धिं व्रजन्त्या चन्द्रलेखया सह दत्तास्ति, या पाठकानां चित्तपटलं सुतरां प्रीणयति । अत्र उभयनिष्ठो देहविकासः परमाह्लादजनकता च साधारणधर्मोऽस्ति ।

(१७) "मुनिव्रतैस्त्वामतिमात्रकर्शितां
दिवाकरप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव पश्यतो दिवा
सचेतसः कस्य मनो न दूयते ॥"

अत्रापि पार्वत्याः उपमा शशाङ्कलेखया समं दत्तास्ति । किन्त्वत्र उभयनिष्ठा क्षीणता दयनीयता चैव साधारणधर्मोऽस्ति । किन्तु इयमप्युपमा सहृदयस्य पाठकस्य हृदयं साधु संस्पृशतीत्यत्र कस्यापि मतिमतो वैमत्यं नैव भवितुमर्हति ।

अथाग्रे उपमालङ्कारसमन्वितानि कानिचित् समुद्धरणानि समयस्य परिसीमितत्वात् निर्व्याख्यान्यपि प्रस्तूयन्ते । यथाहि—

(१) "इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैवम् ।
श्रोष्यत्यस्मात्परमवहिता सौम्य सीमन्तिनीनां
कान्तोदन्तः सुहृदुपनतः संगमात्किञ्चिदूनः ॥"

(उत्तरमेघात्)

(२) "गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥"

(शाकुन्तलात्)

(३) "वत्से ! सुशिष्यपरिदत्ता विद्येवाशोचनीयासि संवृत्ता ।"

(शाकुन्तलात्)

(४) "अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवेमि ॥"

(शाकुन्तलात्)

(५) "एषा मनो मे प्रसभं शरीरात्
पितुः पदं मध्यममुत्पतन्ती ।
सुराङ्गना कर्षति खण्डिताग्रात्
सूत्रं मृणालादिव राजहंसी ॥" (विक्रमोर्वशीयात्)

(६) "अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥"

(मालविकाग्निमित्रात्)

(७) "काशांशुका विकचपद्ममनोज्ञवक्त्रा
सोन्मादहंसरवनूपुरनादरम्या ।
आपक्वशालिरुचिरानतगात्रयष्टिः
प्राप्ता शरन्नववधूरिव रूपरम्या ॥" (ऋतुसंहारात्)

—इत्येतेषु समस्तेष्वेव स्थलेषु कालिदासीयम् उपमावैभवं सर्वैरेव सहृदयैर्विद्वज्जनैर्नितरामनुबोभूयते । वस्तुतो महाकवेः कालिदासस्य सकलशास्त्रपारङ्गतत्वाद् उपमानक्षेत्रमपि सुविशालमासीत् । अत एव, तदुपमानक्षेत्रवैविध्येन एव, तदीया उपमाः बहुविधाः दृष्टिपथमायान्ति । तासु काश्चित् शास्त्र सम्बद्धाः, काश्चित्प्रकृतिसम्बद्धाः, काश्चिदमूर्तभावसम्बद्धाः, काश्चिच्च प्रकीर्णविषयसम्बद्धाः अपि सन्ति । एताश्च समस्ता एवोपमाः सचेतसां चेतांसि चमत्कुर्वन्ति, मनीषिणां मनांसि रमयन्ति, मतिमतां मतीः मोदयन्ति, सहृदयानां हृदयानि ह्लादयन्ति, धीधनानां च धियो वर्धयन्ति, इत्यत्र केषामपि शेमुषीजुषां विदुषां विसंवादो नास्तीति सुतरां सत्यमस्ति ।

वस्तुतस्तु कालिदासीयासूपमासु उपमेयोपमानयोः सौन्दर्यसमन्वितसाम्यशंसिनी सर्वविधौचिती सुतरां समुपलभ्यते । अत एव तासां सौष्ठवं स्वाभाविकं सत् सचेतसां चित्तभूमिं सुतरां सत्वरं सर्वतश्च व्याप्नोति । एतेनैव हेतुना 'उपमा कालिदासस्य' इत्याख्या विद्वल्लोकख्यातिरपि प्रख्याता जातास्ति । अहं मन्ये यदेतेनैव तदीयेनोपमावैभवेन प्रभावितो भूत्वा कश्चिदभिरूपस्तदीयामनुपमामपि काव्यवाणीं मालोपमया उपमितवानस्ति । यथा—

"अस्पृष्टदोषा नलिनीव हृष्टा
हारावलीव ग्रथिता गुणौघैः ।
प्रियाङ्कपालीव विमर्दहृद्या
न कालिदासादपरस्य वाणी ॥"

अथ चाहमपि अन्ते—

कवीनां कालिदासोऽस्त्यलङ्काराणां तथोपमा ।
कालिदासोपमाकीर्त्तिं क्षमो वक्तुं न मादृशः ॥

—इति स्व (एतन्निबन्ध लेखक डॉ० हरिनारायण दीक्षित) विरचितं पद्यं विलिख्य निबन्धविस्तराद् विरमामीति दिक् ।

## भारवेरर्थगौरवम्

गीर्वाणगिरो गगने रवेरिव भासमानस्य महाकवेर्भारवेरेकमात्रेण अष्टादशसर्गात्मकेन किरातार्जुनीयाख्यमहाकाव्येन साम्प्रतं के नाम सुरभारतीजुषो भारतीयाः सुपरिचिता नैव सन्ति ? संस्कृतसाहित्य-सर्जनायाः पाण्डित्यप्रधानायां शैल्यां विरचितेषु संस्कृतमहाकाव्येषु महाकाव्यमेतत् नूनमेवाद्यं महाकाव्यमस्तीत्यस्मात्कारणात्तद्रचयिता महाकविर्भारविरेव एतस्याः पाण्डित्यप्रदर्शनपटीयस्याः विविधचित्रा-लंकारभारगरीयस्याः द्रढीयस्याः शैल्याः प्रवर्त्तको मन्यते मनीषिभि-रिति विज्ञातचरमेव विदुषाम् । एतदनन्तरं तु माघ-रत्नाकरादिभि-रन्यैरनेकैर्महाकविभिरियमलङ्कारबहुला वैदुष्यविपुला पाण्डित्यप्रब-ला सबला साहित्यसृष्टिशैली सुतरां समङ्गीकृता, परां च परिपुष्टिमा-नीता । उल्लेखनीयमस्ति यन्महाकवेर्भारवेरेव किरातार्जुनीयाख्यं महा-काव्यमेतद् बृहत्त्रय्याः अपि आद्यमहाकाव्यत्वगौरवं सगौरवं बिभर्त्ति । अपरे चोभे महाकाव्ये महाकविमाघप्रणीतं शिशुपालवधाख्यं तथा महाकविश्रीहर्षप्रणीतं नैषधीयचरिताख्यं मन्येते । किन्तु केचिन्न-वीना विद्वज्जना नैषधीयचरितस्य स्थाने महाकविरत्नाकरविरचितं हरविजयाख्यं महाकाव्यं बृहत्त्रय्यां परिसंख्यातुं कामयन्ते ।

यद्यपि सम्प्रति किरातार्जुनीयाख्यं महाकाव्यं परिहाय महाकवे-र्भारवेः काचिदपि अन्या कृतिर्नोपलभ्यते, तथापि तदीयकीर्त्तिकामि-न्याः कमनीयतायां कापि न्यूनता केनापि नानुभूयते । अत एवाहं मन्ये यद् 'वरमेको गुणी पुत्रो नच मूर्खशतान्यपि । एकश्चन्द्रस्तमो हन्ति नच ताराशतान्यपि ॥'—इति कथनं भारविविषये इदानीमक्षर-शश्चरितार्थं बोभूयमानमस्ति ।

अत्र काचिदपि संशीतिर्नास्ति यद् भारविः स्वसमसामयिके संस्कृतसाहित्यकारसमाजे किमपि अतिविशिष्टमेव यशोऽधिगन्तुं

स्वीयेऽस्मिन्महाकाव्ये स्थाने स्थाने निज समुत्कृष्टं विविधं पाण्डित्य-पाटवं प्रकटयामास । एतेनैव कारणेन तदीयेऽस्मिन् महाकाव्ये काव्य-कलायाः कलापक्षो भावपक्षापेक्षया महत्प्रागल्भ्यं प्राप्तवानस्ति । अत एव केचिदाधुनिकाः समीक्षकास्तत्र काठिन्यकल्पनामपि प्रकुर्वन्ति । किन्तु वस्तुतो यदि दृश्येत, तर्हि तदीयमहाकाव्यगतकाठिन्यमेतत् नारिकेलफलोपरिभागगतकाठोर्य्यमिव एव प्रतीयेत; यदन्तर्भागे सरसमरसं सौरस्यं सुतरामेव सुलभं भवति । मन्ये, मल्लिनाथेन एत-देवानुभूय इदमुक्तमस्ति यद्--

"नारिकेलफलसंमितं वचो भारवेः सपदि तद् विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ॥"

एवं सत्यपि सम्प्रति समीक्षकाणां समाजे किरातार्जुनीयमहा-काव्यकारस्य महाकवेर्भारवेर्यावती प्रशंसा तत्काव्यान्तर्गतार्थगौरव-कारणाद् भवति, तावती नान्यस्मात् तदीयरसभावरीत्यलंकारादि-संनिवेशकौशलकारणादिति तथ्यमद्य केषामपि समीक्षाजगज्जुषां विदुषां तिरोहितं नास्ति । अत एव साम्प्रतिकेषु समीक्षकेषु अयमाभा-णकोऽपि निशम्यते यद् --

"उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥" इति ।

अथ जनानां जिज्ञासा जायते यदिदम् अर्थगौरवम् अस्ति किम् ? एतत्समाधये वक्तुं शक्यते यद् यत्र वाच्यार्थे तु संक्षेपो भवेत्, किन्तु तदीये भावार्थे भूयान् गरिमा भवेत्; महिमा भवेत; द्रढिमा भवेत्; तस्माच्चान्यस्य कस्यापि सर्वजनीनस्यार्थस्य प्रभवो भवेत्; सहृदय-हृदये सावीयसी संविदुदयेत्; जनमानसपटले पटीयसी पटुता प्रस्फुटेत्; काव्यस्य सकललोकोपयोगिता च संसिद्ध्येत्: तत्र नूनमेव तत्का-व्यान्तर्गतं वस्तुव्यङ्ग्यरूपं तदर्थगौरवमेव मन्तव्यमिति ममाशयो मन्ये मनीषिणामपि मान्यो भविष्यति ।

अथाहं स्वनैकतमनिबन्धनीयनिबन्धानुसारेण महाकवेर्भारवेः अर्थ-गौरवसिसाधयिषया किरातार्जुनीयाख्यान्महाकाव्याद् अर्थगौरवा-न्वितानि कतिपयानि पद्यानि तदन्तर्निहितार्थगौरवसमुन्मीलनपुरस्सरं भवतां पुरस्तादत्र प्रस्तौमि ।

यथा—

(१) "क्रियासु युक्तैर्नृप ! चारचक्षुषो
न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वचः ॥

राज्ञो युधिष्ठिरस्य गुप्तचरो वनेचरो दुर्योधनोदन्तजातं विदित्वा पुनर्द्वैतवनमागत्य युधिष्ठिरं ब्रूते यद् राजन् ! अहं मन्ये यद् अनुजीविभिर्गुप्तचरैः मिथ्यामाधुर्य्यमिश्रितं वृत्तान्तं विनिवेद्य राजानो नैव वञ्चनीयाः । अत एवाहं यदि अप्रियमपि सूचयेयम्, तर्हि भवता क्षन्तव्योऽस्मि । यतोहि हितकारिणि वचने मनोहारिता प्रायेण दुर्लभा एव भवति ।

अस्मिन् पद्ये 'हितं मनोहारि च दुलभं वचः' इत्यात्मकमतिसंक्षिप्तमंशजातं भारवेरर्थगौरवमेव संसूचयति । प्रकृत-प्रसंगं परिहायापि मानवजीवनस्य सर्वेष्वेव क्षेत्रेषु इदं कथनं साधुतया संगच्छते । यतोहि अयं कोऽपि नियमो नास्ति यद् हितकरं वचनं मनोहरमेव भवति, तदप्रियमपि भवितुं शक्नोति; एवमेव मनोहरं वचनं हितकरमेव भवतीत्ययमपि नियमो नास्ति, तद् अहितकरमपि भवितुं शक्नोति । इत्थमेव एषोऽपि कोऽपि नियमो नास्ति यद् अहितकरं वचनम् अप्रियमेव भवति, तत्प्रियमपि भवितुं शक्नोति, तथा अप्रियं वचनम् अहितकरमेव भवतीत्येषोऽपि नियमो नास्ति, तद् हितकरमपि भवितुं शक्नोति । अत एव सर्वथा सुविचार्य 'वक्तुर्वचनं हितकरम् अहितकरं वा' इत्येव श्रोत्रा साधु सन्धार्य वक्तरि प्रसादः प्रकोपो वा यथायथं विधातव्यः तथा तदीयं प्रियत्वमप्रियत्वञ्च समुपेक्षितव्यमेव । यतोहि प्रियता अप्रियता वा तु सम्बद्धवाच्यविषयाश्रिता भवति, तत्र तथ्यवक्तुर्न काचिदपि गतिर्भवतीति भारवेराशयो नूनमेव तदीयमर्थगौरवगुरुत्वं संसाधयतीति न मे संशयः ।

(२) "स किंसखा साधु न शास्ति योऽधिपं
हितान्न यः संशृणुते स किंप्रभुः ।
सदानुकूलेषु हि कुर्वते रतिं
नृपेष्वमात्येषु च सर्वसम्पदः ॥"

अत्रापि हितकरस्योपदेशस्य सचिवकर्त्तृकं दानं (वचनं) राजकर्त्तृकं चादानं (श्रवणं) समानेन सम्मानेन प्रशंसितं विद्यते; यस्मिन् यदि कस्माच्चिदपि पक्षात्प्रमादो भवति, तर्हि नूनं तत्रापदो भवन्तीति-भारवेर्मतं सार्वकालिकं सत्यं सत्स्वीयमर्थगौरवं साधुतया प्रकाशयतीत्यत्र कस्यापि मतिमतोऽद्यापि वैमत्यं नास्ति।

(३) "तथापि जिह्मः स भवज्जिगीषया
तनोति शुभ्रं गुणसम्पदा यशः।
समुन्नयन्भूतिमनार्यसङ्गमाद्
वरं विरोधोऽपि समं महात्मभिः।"

सद्गुणगणशालिनं युधिष्ठिरं जेतुकामो जिह्मो दुर्योधनोऽपि प्रजासु दानदाक्षिण्यादिगुणसम्पत्सम्पादनपुरस्सरमात्मनो गुणवत्तरतां प्रकटयतीति प्रेक्ष्य गुप्तचरो याथातथ्येन तत्सर्वं युधिष्ठिराय विनिवेद्य विशदयति यद् दुष्टजनमित्रतापेक्षया तु साधुजनशत्रुतापि साधीयसी भवति। यतोहि शत्रुत्वेन मतं तं साधुजनं जेतुं दुर्गुणी जनोऽपि सद्गुणांस्तु अर्जयति। अत्रापि भारविसमुद्भावितः साध्वसाधुजनगतव्यवहारविवेकस्तदीयमर्थगौरवमेवोद्दीपयतीत्यपि विवेकिनां सुविदितमेव।

(४) "व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठास्तथाविधा—
नसंवृताङ्गान्निशिता इवेषवः॥"

महाकाव्यस्य नायिका भारतवर्षाधीश्वरी द्रौपदी युधिष्ठिरं प्रबोधयति यद् ये जना मायाविषु जनेषु मायिनो न भवन्ति, ते मूर्खाः सन्ति तथा पराभूता अपि भवन्ति। यतोहि त एव मायाविनो धूर्त्ताः शठाः पुरुषास्तान् सरलचेतसो जनान् तथैव सारल्येन घ्नन्ति, यथा प्रबलपुरुषप्रेरितास्तीक्ष्णाः शराः कवचहीनान् दुर्बलान् जनान् अनायासेनैव घ्नन्ति। अत्र भारवेराशयोऽस्ति यत् शठेन सह शाठ्यमेव समाचरणीयम्। अर्थात्, मायाचारो मायया एव निरसनीयः। यो जनः स्वचित्तसारल्यात् शठेषु शाठ्यं नाचरति, स नूनमेव नश्यति।

तस्मात् 'आर्जवं हि कुटिलेषु न नीतिः' इति निर्गलितो भारवेरर्थोऽत्रापि निजमर्थगौरवं नितरां प्रकटयतीति न कापि संशीतिकणिका ।

(५) "इयमिष्टगुणाय रोचतां
रुचिरार्था भवतेऽपि भारती ।
ननु वक्तृविशेषनिःस्पृहा
गुणगृह्या वचने विपश्चितः ॥"

अत्र भीमसेनो युधिष्ठिरं ब्रूते यद् द्रौपदीसमुदीरितं रुचिरार्थं वचो भवता इष्टगुणत्वाद् ग्राह्यमेवास्तु । यतोहि विद्वांसस्तु वचनस्य गुणान् गृह्णन्ति; इदं न विचारयन्ति यदस्य वचनस्य वक्ता कोऽस्ति । अर्थात्, सुभाषितं तु बालादपि कलत्रादपि च ग्राह्यम् । यतोहि विद्वान् स एवास्ति यो वक्तुर्वयोलिङ्गवर्णादिविचारं न कृत्वा वचनस्य गुणान् हृदा मुदा च गृह्णातीति भारवेर्भावोऽद्यापि सर्वेषां कृते हृद्यानवद्यो बोभूयमानो निजमर्थगौरवमेव परिपुष्णाति ।

अथाग्रे संक्षेपेणैव सन्दर्भहीनं तदीयमर्थगौरवमुपस्थाप्यते । यथा—पराक्रमेणैव समृद्धयोऽनुभूयन्ते, नतु विषादेन; इति प्रतिपादयन् भारविर्लिखति यद्—'निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः' इति । सहसा किमपि कार्यं नैव करणीयम् । एतेन हानिरपि सम्भवति । विमृश्य कार्यकर्त्तारं जनं सदैव सफलता समालिङ्गतीतिसन्देशदानकामनया स ब्रूते—'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥' इति । तन्मतेन राज्ञा सदैव राजनीतिमता भवितव्यम् । इतरथा स मन्यते यद्—'नयहीनादपरज्यते जनः' इति । तदीयो निर्णयोऽस्ति यत्सत्पुरुषेषु तु महात्मानोऽपि पक्षपातं कुर्वन्ति । अतो लिखति स यद्—'वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः' इति । एवमेव पराक्रमेणैव रणे जयो लभ्यते; अतस्तदर्थं यत्नो विधेयः, इति मन्यमानो निर्दिशति स यद्—'अतः प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्रा हि रणे जयश्रीः' इति । रागद्वेषाभिभूता जना; सत्पुरुषमपि प्रपीडयन्तीति संसूचयन् स वक्ति—'मात्सर्यरागो-

पहृतात्मनां हि स्खलन्ति साधुष्वपि मानसानि'। स्वाभाविकं सौन्दर्यं विभूषां नापेक्षते, इति भावनयाभिधत्ते सः—'न रम्यमाहार्यमपेक्षते गुणम्'। तदीयदृष्टौ प्रियतायै गुणा अपेक्ष्यन्ते, नतु परिचयः सम्बन्धो वा, इति धिया स लिखति—'गुणाः प्रियत्वेऽधिकृता न संस्तवः'। यद्यपि मुखरता श्रेयसी न मन्यते, किन्तु उचितावसरे सापि शोभते, इति मनसा लिखति सः—'मुखरतावसरे हि विराजते'। श्रेयोलाभमार्गे प्रभूता विघ्ना भवन्त्येव; अतस्तदुपशमायापि नरेण सज्जेन भाव्यमिति संसारं सूचयितुं स लिखति-'श्रेयांसि लब्धुमसुखानि विनान्तरायैः'। गुणाः सर्वानेव वशीकुर्वन्तीतिधियाभिधत्ते सः—'कमिवेशते रमयितुं न गुणाः'? एवमेव आकर्षणं तु प्रेम्णि भवति, नतु वस्तुनि, इति निर्देशदानाय लिखति—'वसन्ति हि प्रेम्णि गुणा न वस्तुनि'। यदा मनुष्यस्य मनो दुःखितं भवति, तदा तस्मै किमपि रम्यमपि वस्तु नैव रोचते, इति सिद्धान्तं प्रतिपादयन् स वक्ति—'दुखिते मनसि सर्वमसह्यम्'। मदिरा नूनमेव स्वसेविनो मनोगतं गुणं दोषं वा प्रकटीकरोतीति प्रकटयन् स लिखति—'कारयत्यनिभृता गुणदोषं वारुणी खलु रहस्यविभेदम्'। विजयाभिलाषिणो जना नीतिमार्गात् नैव प्रविचलन्तीत्यनुभूय समुपदिशति—'चलति नयान्न जिगीषतां हि चेतः'। इतरत्सर्वं सर्वदा सुलभम्, किन्तु स्नेहवती निजानुरूपा च युवतिर्दुर्लभा भवतीतिभावं मनसि निधाय प्रस्फुटं ब्रूते सः—'पुनरपि सुलभं तपोऽनुरागी युवतिजनः खलु नाप्यतेऽनुरूपः' इति।

स्पष्टमस्ति यदेतेषु समस्तेष्वेव स्थलेषु महाकवेर्भारवेरर्थगौरवं वस्तुव्यङ्ग्यं काव्यमिव सहृदयानां हृदयानि प्रीणयितुं सुतरां समर्थमस्तीत्यत्र केषामपि धीजुषां विदुषां विवादो भवितुं नार्हतीति मे मतिरस्ति।

अथाग्रे भारवेरर्थगौरवान्वितानि कानिचिद् वाक्यानि स्वसमयस्य परिसीमितत्वादत्र भावार्थविहीनान्यपि प्रस्तूयन्ते। तानि यथा—

(१) "अविज्ञातेऽपि बन्धौ हि बलात्प्रह्लादते मनः।"

(२) "सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम्।"

(३) "शरदम्बुधरच्छायागत्वर्यो यौवनश्रियः ।
आपातरम्या विषयाः पर्यन्तपरितापिनः ।"

(४) "भोगान्भोगानिवाहेयानध्यास्यापन्न दुर्लभा ।"

(५) "श्रद्धेया विप्रलब्धारः प्रिया विप्रियकारिणः ।
सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि शत्रवः ॥"

(६) "अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि ।
व्रजन्त्यफलतामेव नयद्रुह इवेहितम् ॥"

(७) "असन्मैत्री हि दोषाय कूलच्छायेव सेविता ।"

(८) शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥"

(९) "तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥"

(१०) "नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान्पुमान् ॥'

(११) "महतां हि धैर्यमविभाव्यवैभवम् ।"

(१२) "किमिवास्ति यन्न सुकरं मनस्विभिः ?"

(१३) "गुरुतां नयन्ति हि गुणा न संहतिः ।"

(१४) "परमं लाभमरातिभङ्गमाहुः ।"

(१५) "मित्रलाभमनु लाभसम्पदः ।"

(१६) "संवृणोति खलु दोषमज्ञता ।"

(१७) ' विविक्तवर्णाभरणा सुखश्रुतिः
प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्त्तते नाकृतपुण्यकर्मणां
प्रसन्नगम्भीरपदा सरस्वती ॥"

(१८) "भवन्ति ते सभ्यतमा विपश्चितां
मनोगतं वाचि निवेशयन्ति ये ।
नयन्ति तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित्प्रकाशताम् ॥"

(१९) "स्तुवन्ति गुर्वीमभिधेयसम्पदं
विशुद्धिमुक्तेरपरे विपश्चितः।
इति स्थितायां प्रतिपूरुषं रुचौ
सुदुर्लभाः सर्वमनोरमा गिरः॥"

(२०) "अयातपूर्वा परिवादगोचरं
सतां हि वाणी गुणमेव भाषते।"

(२१) "व्रताभिरक्षा हि सतामलङ्क्रिया।"

(२२) "सहापकृष्टैर्महतां न सगतं
भवन्ति गोमायुसखा न दन्तिनः।"

(२३) "नातिपीडयितुं भग्नानिच्छन्ति हि महौजसः।"

स्थालीपुलाकन्यायेनात्र उपरिसमुद्धृतानि इमानि कतिपयानि भारवीयवाक्यानि तदीयस्य विविधस्य लोकनैपुणीबोधकस्य अर्थगौरवस्य परिपुष्टये पर्याप्तानि सन्तीत्यत्र मन्ये समेषामेव शेमुषीजुषां सहमतिः सम्पत्स्यते। एतेषु सर्वेष्वेव वाक्येषु लोकसन्देशसौन्दर्यपुरस्सरं जनमानसोपदेशपूर्वकं च भावार्थस्य गाम्भीर्य्यमनुभूय सर्वेषामेव सचेतसां चेतांसि चमत्कृता निजायन्ते तथा परमाह्लादमाप्नुवन्तीत्यत्र मम मनसि मनागपि संशयो नास्ति। अतोऽहं मन्ये यत्केनचित्समीक्षकेण इदमनवद्यमेव उदितमस्ति यद् 'भारवेरर्थगौरवम्'; इत्यलं च पल्लवितेन।

## दण्डिनः पदलालित्यम्

सुरभारतीसाहित्ये पद्यकाव्यकाराणामिव गद्यकाव्यकाराणामपि अतिमहत्त्ववती भूयसी च संख्या वर्त्तते। सुबन्धु-बाण-दण्डि-धनपाल-वादीभसिंह-अम्बिकादत्तव्यास-विश्वेश्वरपाण्डेय-श्रीनिवासादीनां रसभाववद्गद्यकाव्यकाराणां नामानि अद्यतने संस्कृतसाहित्यसमीक्षकाणां समाजे विपुलादरेण विख्यातानि विद्यन्ते इति संस्कृतसाहित्यसमीक्षेतिहासानुशीलनपराणामभिरूपाणां विदितमेवास्ति। एतेषु सुबन्धोर्वासवदत्ता, बाणभट्टस्य हर्षचरितं कादम्बरी च, दण्डिनो दशकुमारचरितम्, धनपालस्य तिलकमञ्जरी, वादीभसिंहस्य गद्यचिन्तामणिः, अम्बिकादत्तव्यासस्य शिवराजविजयः, विश्वेश्वरपाण्डेयस्य मन्दारमञ्जरी, श्रीनिवासस्य च चन्द्रमहीपतिः स्वीयैः स्वीयैः विशिष्टैः सन्तुष्टशिष्टैः साहित्यिकैर्गुणैः संस्कृतसाहित्यस्य कमनीयकीर्त्तिकान्तिपूरं परिवर्धयन्तीत्यपि प्रायेण सर्वे एव संस्कृतसाहित्यविद्वांसो विदन्ति। समीक्षकास्तु इदमपि विदन्ति यत् पद्यात्मकसाहित्यसर्जनापेक्षया गद्यात्मककाव्यसृष्टौ भूयसी साधना समपेक्ष्यते। अत एव 'गद्यं कवीनां निकषं वदन्ति' इत्याभाणकोऽपि ख्यातिं प्राप्तवानस्ति। एतेन सिद्ध्यति यद् गद्यात्मककाव्यकलाकाराणां महत्त्वं पद्यात्मककाव्यकलाकाराणामपेक्षया न्यूनं नास्ति, अपितु अधिकतरमेवास्तीति समीक्षकाणां धारणा साधारण्येन सर्वैरेवाङ्गीक्रियते।

यद्यपि सुबन्धु-बाण-धनपालादीनां सर्वेषामेव गद्यकाव्यकाराणां कृतिषु काव्यकलाविषयकाणि सहृदयहृदयहराणि विविधानि वैशिष्ट्यानि समुपलभ्यन्ते, किन्तु पदलालित्यविषये यादृशी प्रशंसा दण्डिनो विधीयते, तादृशी नान्यस्य कस्यापि अद्यावधि श्रुतिपथं समायातास्ति। सर्वेष्वेव गद्यकाव्यकारेषु तदीयं पदलालित्यं सर्वश्रेष्ठं सर्वप्रेष्ठं च प्रेक्षं प्रेक्षमेव प्रेक्षावद्भिर्विपश्चिद्भिरिदं सामोदमङ्गीकृतं यद्—

"उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ।।" इति ।

यद्यपि पदलालित्यपदं स्पष्टार्थमस्ति, तथापि विशदार्थावबोधाय अत्र तदीयो भावो व्याख्यायते । पदशब्दप्रतिपत्तये महर्षिणा पाणिनिना प्रत्यपादि यत् 'सुप्तिङन्तं पदम्' इति । अर्थात्, सुबन्तं तिङन्तं च पदशब्देनाभिधीयते । एवञ्चात्र प्रयुक्तो लालित्यशब्दो मनोहर-प्रिय-मधुरादिपर्य्यायस्य ललितशब्दस्य ष्यञि प्रत्यये विहिते सति भाववाचकसंज्ञात्वेन प्रयोगपथमारोहतीत्यादि सर्वं शब्दशास्त्रावगाहनसंजातनिर्मलमतीनां मनीषिणां प्रत्यक्षमेवास्तीत्यहं मन्ये । एवं सति ज्ञाते पदानां लालित्यमिति पदलालित्यमिति षष्ठीतत्पुरुष-समासस्य साहाय्येन शब्दोऽयं निष्पत्तिं प्रतिपद्यते; यस्य च भावो भवति यन्मनोहराणां मधुराणां प्रियाणां प्रवाहपूर्णानां मुखसुख-पुरस्सरमुच्चारयितुमर्हाणां सनादमाधुर्याणां लयात्मकानां च संज्ञा-शब्दानां क्रियापदानां वा यस्मिन् काव्ये पटीयान् प्रभूतः प्रयोगः प्राप्यते, तत्र समीक्षेक्षिकया पदलालित्यमस्तीति प्रीतिप्रशंसापूर्वक-मुररीक्रियते । अस्माकं चात्र विवेचनीये दण्डिकविकाव्ये एतादृशमेव पदलालित्यमक्षिलक्ष्यीकृत्य निष्पक्षाक्षैः स्वकार्यदक्षैः समीक्षकैः समीक्षकैः 'दण्डिनः पदलालित्यम्' इत्यात्मिका प्रशंसात्मिका कीर्त्यात्मिका चोक्तिः प्रीतिपुरस्सरं प्रचारितास्तीति मन्ये मदीयाशये न कोऽपि सदाशयः संशयिष्यते ।

शार्ङ्गधरपद्धत्यां राजशेखराख्यकर्तृकत्वेन समुल्लिखितेन निम्नलिखितेन—

"त्रयोऽग्नयस्त्रयो देवास्त्रयो वेदास्त्रयो गुणाः ।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ।।"

इत्यात्मकेन पद्येन निश्चप्रचमेतत्प्रतिभाति यत्कविना दण्डिना त्रयो ग्रन्थास्तु नूनमेव एवम्भूता विरचिता आसन्, येषां ख्यातिः सर्वत्रैव प्रसृतासीत् । एतेषु त्रिषु ग्रन्थेषु दशकुमारचरितं काव्यादर्शश्च नूनमेव तस्य मन्येते । किन्तु तदीयस्तृतीयो ग्रन्थो बहुविधविवादग्रस्तो विद्यते । केचन अवन्तिसुन्दरीकथाम्, केचन छन्दोविचितिम्, केचन

कलापरिच्छेदम्, केचन द्विसन्धानकाव्यं च तस्य तृतीयकृतित्वेन स्वीकर्त्तुमाग्रहं कुर्वन्ति । परमद्यावधि तदीया तृतीया कृतिः कास्तीति सर्वसम्मत्या नैव निर्णीतमस्ति ।

यतः काव्यादर्शो लक्षणनिरूपणात्मकः काव्यशास्त्रीयो ग्रन्थो विद्यते तथा तृतीया कृतिरद्यावधि विवादग्रस्तास्ति, अतो मया केवलं दशकुमारचरितमेवाश्रित्य दण्डिनः पदलालित्यमत्र भवतां पुरस्तात्-प्रस्तूयते । यथा –

(१) 'स्वर्लोकशिखरोरुरुचिररत्नरत्नाकरवेलामेखलायितधरणीरमणीसौभाग्यभोगभाग्यवान् अनवरतयागदक्षिणारक्षितशिष्टविशिष्टविद्यासम्भारभासुरभूसुरनिकरो विरचितारातिसंतापेन प्रतापेन सतततुलितवियन्मध्यहंसो राजहंसो नाम घनदर्पकन्दर्पसौन्दर्यसोदर्यहृद्यनिरवद्यरूपो भूपो बभूव । तस्य...... लीलावतीकुलशेखरमणी रमणी बभूव ।"

(२) "ततः स रत्नाकरमेखलामिलामनन्यशासनां शासदनपत्यतया नारायणं सकललोकैककारणं निरन्तरमर्चयामास ।"

(३) ' मानो मानसारः स्वसैनिकायुष्मत्तान्तराये सम्पराये भवतः पराजयमनुभूय वैलक्ष्यलक्ष्यहृदयो वीतदयो महाकालनिवासिनं कालीविलासिनम् अनश्वरं महेश्वरं समाराध्य तपः प्रभावसन्तुष्टादस्माद्''' भयदां गदां लब्ध्वात्मानमप्रतिभटं मन्यमानो महाभिमानो भवन्तमभियोक्तुमुद्युङ्क्ते ।"

(४) "ततः परस्मिन्दिवसे वामदेवान्तेवासी तदाश्रमवासी समाराधितदेवकीर्त्ति निर्भर्त्सितमारमूर्त्ति कुसुमसुकुमारं कुमारमेकमवगमय्य नरपतिमवादीत् – देव ! विलोलालकं बालकं निजोत्सङ्गतले निधाय रुदतीं स्थविरामेकां विलोक्यावोचम्...... ।"

(५) "कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेन यानेनाभ्युदयाशंसं राजानमकार्षुः ।"

(६) " अथ मीनकेतनसेनानायकेन मलयगिरिमहीरुहनिरन्तरावासिभुजङ्गमभुक्तावशिष्टेन...... दक्षिणानिलेन वियोगिहृदयस्थं

मन्मथानलमुज्ज्वलयन्, सहकारकिसलयमकरन्दास्वादनरक्तकण्ठानां मधुरकलकण्ठानां काकलीकलकलेन दिक्चक्रं वाचालयन्, मानिनीमानसोत्कलिकामुपनयन्, माकन्दसिन्दुवाररक्ताशोककिंशुकतिलकेषु कलिकामुपपादयन्, मदनमहोत्सवाय रसिकमनांसि समुल्लासयन्, वसन्तसमयः समाजगाम।"

(७) 'तदनु विषमं विषमुल्वणं वमन्तः फणालङ्करणा रत्नराजिनीराजितराजमन्दिराभोगा भोगिनो भयं जनयन्तो निश्चेरुः।"

स्पष्टमेवास्ति यदेतेषु समस्तेष्वेव स्थालीपुलाकन्यायेनात्र समुदाहृतेषु स्थलेषु कोमला, मृदुला, मञ्जुला, रसपेशला, नादसौन्दर्यबहुला, प्रवाहपेलवा, सहृदयहृदयप्रिया, प्रभूता पदशय्या पाठकानां चित्तपटले अमन्दमानन्दसन्दोहं समावेशयतीत्यत्र मन्ये केषामपि शेमुषीजुषां विदुषां विवादो भवितुं नार्हति।

न केवलन्तावदेतावदेव, अपितु उत्तरपीठिकायाः सप्तमोच्छ्वासे मन्त्रगुप्तचरिते तु तेन ओष्ठ्यवर्णविरहितेऽपि स्वकीये काव्यबन्धे पदलालित्यस्य मनोहरो विस्मयकरश्च पटीयान् प्रयोगो विहितोऽस्तीति प्रेक्षं प्रेक्षं परमां प्रीतिमापद्यते पाठकानां चेतः। निदर्शनत्वेन कानिचिदत्र स्थलानि प्रस्तूयन्ते। यथा—

(१) "गलति च कालरात्रिशिखण्डजालकान्धकारे चलितरक्षसि क्षरितनीहारे निजनिलयनिलीननिःशेषजने नितान्तशीते निशीथे घनतरसालशाखान्तरालान्हादिनि नेत्रनिसिनीं निद्रां निगृह्णन्··· खलीकृतः।"

(२) "अथ कदाचिदायासितजायारहितचेतसि लालसालिलङ्घनग्लानघनकेसरे राजदरण्यस्थलीललाटलीलायिततिलके······दक्षिणदहनसारथिरयाहृतसहकारचञ्चरीककलिके······ शालीनकन्यकान्तःकरणसंक्रान्तरागलङ्घितलज्जे दर्दुरगिरितटचन्दनाश्लेषशीतलानिलाचार्यदत्तनानालतानृत्यलीले काले कलिङ्गराजः सहाङ्गनाजनेन ······क्रीडारसजातासक्तिरासीत्।"

(३) "दिष्ट्या दृष्टेष्टसिद्धिः। इह जगति हि न निरीहं देहिनं

श्रिय: संश्रयन्ते । श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसान्निध्यानि ।"

(४) "स किल कृतज्ञतां दर्शयन्—'असिद्धिरेषा सिद्धि:, यदसन्निधिरिहार्याणाम् । कष्टा चेयं नि:सङ्गता, या निरागसं दासजनं त्याजयति न च निषेधनीया गरीयसां गिर:' इति स्नानाय गृहानयासीत् ।"

(५) "अथ सा हर्षकाष्ठां गतेन हृदयेनेषदालक्ष्य दशनदीधितिलतां लीलालसं लासयन्ती ललिताञ्चितकरशाखान्तरितदन्तच्छदकिसलया, हर्षजलक्लेदजर्जरनिरञ्जनेक्षणा रचिताञ्जलि: नितरां जाने यदि न स्यादैन्द्रजालिकस्य जालं किञ्चिदेतादृशम् । कथञ्चैतत्कथय, इति··· शनैरगादीत् ।"

कथनस्यावश्यकता न प्रतीयते यदत्र सर्वत्रैव ओष्ठ्यवर्णविरहेऽपि पदलालित्यस्य कान्तिपूरे न कापि हानिरनुभूयते । तस्मात् सुतरामेतत्सिद्ध्यति यत्कवेर्दण्डिन: पदलालित्यमिदं न केवलेऽस्मिन् संस्कृतसाहित्ये एव, अपितु निखिलेऽपि विश्वसाहित्ये नूनमेव स्वभावसिद्धं सत्सर्वथैव सर्वश्रेष्ठमस्तीति मनागपि मे न संशय: । अत एवाहं मन्ये यत्कविदण्डिनो वाग्विलासं सरस्वत्या: मणिदर्पणं मन्यमाना मधुराविजयकाव्यकर्त्री गङ्गादेवी सुतरामेव सत्यमाह यद्—

"आचार्यदण्डिनो वाचामाचान्तामृतसम्पदाम् ।
विकासो वेधस: पत्न्या विलासमणिदर्पणम् ।।" इति ।

मन्ये, एतेनोपरिविहितेन सोदाहरणेन विश्लेषणेन विशदीभूतं भवेद् यद् दण्डिन: पदलालित्यस्य याद्यावधि प्रशंसा वोभूयते, सा सुतरां तथ्यपूर्णास्तीत्यत्र मतिमतां वैमत्यं नास्ति सम्भवमित्यलं च भूयसा पल्लवितेनेति विचार्य विरमामि विस्तरभरात् ।

## माघे सन्ति त्रयो गुणाः

'माघे सन्ति त्रयो गुणाः' इत्येतत्कथनम् एकस्य श्लोकस्य तुरीये पादे लभ्यते। अतः एतद्व्याख्याहेतवे तस्य श्लोकस्यात्र समुद्धरणं परमावश्यकं प्रतिभाति। श्रूयतां स श्लोकः एवम्भूतोऽस्ति—

"उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः॥" इति।

एतेन श्लोकेन प्रकटीभवति यत्कालिदासे उपमालङ्कारसन्निवेशकौशलम्, भारवौ अर्थाभिव्यक्तिगरिमा, दण्डिनि च पदलालित्यमेव केवलं विशेषरूपेण लभ्यते; किन्तु अस्माकमत्र विवेचनीये प्रौढपाठकप्रणमनीये महाकवौ माघे तु उपमाविधानरामणीयकम्, अर्थगौरवचारुत्वं तथा पदलालित्यमिति त्रयोऽपि काव्योपकारकाः गुणाः समवेता भूत्वा अहमहमिकया वरीवृत्यन्ते। अत एव च एकस्मिन्नेव माघकवौ त्रयोऽप्यन्ये तत्तत्क्षेत्रे प्राप्तप्रतिष्ठाः कालिदासभारविदण्डिनामानो महाकवयोऽन्तर्भवन्तो विलोक्यन्ते, इति तदीयशिशुपालवधनामधेयमहाकाव्यामृतपायिनां परिपक्वमतिमतां विपश्चितां सुतरामनुभूतचरमेव।

यद्यपि माघविरचितानि कतिपयानि प्रस्फुटानि पद्यान्यपि समुपलभ्यन्ते, तथापीदानीं विंशतिसर्गात्मकशिशुपालवधनामकमहाकाव्यव्यतिरिक्ता तदीया काचिदप्यन्या कृतिर्नोपलभ्यते। अतस्तदीया यशश्चन्द्रिका केवलादस्मादेव महाकाव्यरूपेन्दुवपुषः प्रसरन्त्यपि निखिलं कविविश्वं व्याप्य विद्यते, इत्यत्र नास्ति मतिवैमत्यं मतिमताम्।

अथाहमत्र उपर्युक्तस्य गुणत्रयस्य महाकवौ माघे प्रदर्शनाय तत्तद्गुणपुष्टिविधायकानि कानिचित्तदीयानि पद्यानि प्रस्तौमि। सर्वप्रथमं तावत्तदीयाया उपमाया एव सहृदयचित्तचमत्कारजनकतामालोकयन्तु सुधियः। यथा—

(१) "दधानमम्भोरुहकेसरद्युतीर
जटाः शरच्चन्द्रमरीचिरोचिषम् ।
विपाकपिङ्गास्तुहिनस्थलीरुहो
धराधरेन्द्रं व्रततीततीरिव ॥"

अस्मिन् पद्ये महाकविर्माघो गगनादवतरन्तं देवर्षि नारदं धराधरेन्द्रेण हिमालयेन उपमिमीते । यतोहि नारदः शारदेन्दुरश्मिधवलोऽस्ति तथा स्वशीर्षे कमलकिञ्जल्कवर्णाः जटा अपि दधानोऽस्ति । अत एव स महाकविमाघदृष्टौ तथैवास्ति यथा हिमधवलो हिमालयो निजोत्तुङ्गतुषारावृतस्थलीषु विपाकपिङ्गाः लताः धारयन् भवति । अत्र उपमेयो देवर्षिर्नारदः, उपमानं धराधरेन्द्रो हिमालयः, धवलत्वं पिङ्गलवर्णपदार्थधारकत्वं चेत्युभयत्र साधारणो धर्मः, इवशब्दश्चोपमानवाचकः शब्दः । एतस्मादत्र पूर्णोपमायां न संशयः ।

(२) "सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः ।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥"

अस्मिन् पद्ये कोपपरीतस्य शिशुपालस्य समक्षं शान्तिसमन्वितवचनकथनं तथैव तत्कोपोद्दीपकं भविष्यति यथा प्रतप्ते घृते पातिताः जलबिन्दवस्तद्घृततापोद्दीपकाः एव भवन्तीति कविना बलराममुखेन साधु प्रतिपादितमस्ति । अत्र उपमेयभूतस्य कोपपरीतस्य शिशुपालस्य प्रतप्तं घृतमुपमानमस्ति; तथैव च उपमेयभूतानां सामवादानां (सान्त्वनावचनानाम्) तोयबिन्दवः उपमानं सन्ति । उद्दीपनं चोभयनिष्ठः साधारणधर्मोऽस्ति तथा इवशब्दस्य उपमावाचकता तु स्फुटैवास्ति । तस्मादत्रापि पूर्णोपमाया एव माघा सहृदयहृदयं समाकर्षतीति न संशयः । अहं मन्ये यदस्यामुपमायां कविना दुर्जनस्य, तत्रापि च सकोपस्य, दुराराध्यता महता वैशद्येन सुन्दरसाम्यप्रदर्शनपुरस्सरं प्राकाश्यमानीतास्ति ।

(३) "नालम्बते दैष्टिकतां न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥"

यथा सत्कविः सत्साहित्यसिसृक्षया न केवलं शब्दम्, नवा केवलमर्थमाश्रयति, अपितु शब्दार्थौ उभावेव समाश्रयति; तथैव विद्वान्

जनोऽपि सत्कार्यसंसिद्धये न केवलं भाग्यम्, नवा केवलं पौरुषमेवा-वलम्बते, अपितु भाग्यपौरुषे उभे एव समवलम्बते, इत्युद्धवमुखेन सर्वाङ्गसमन्वितसाम्यप्रदर्शनपूर्वकं महाकविर्माघोऽस्मिन् पद्ये भाग्य-वाद-कर्मवादयोर्मञ्जुलं प्राञ्जलं च समन्वयं सम्पादयामास ।

अथाग्रे कतिपयानि तदीयानि उपमान्वितानि पद्यानि समय-सीम्नः सामीप्यात् निर्व्याख्यान्यपि प्रस्तूयन्ते । यथाहि—

(१) "विहङ्गराजाङ्गरुहैरिवायतैर्
हिरण्मयोर्वीरुहवल्लितन्तुभिः ।
कृतोपवीतं हिमशुभ्रमुच्चकैर्
घनं घनान्ते तडिताङ्गणैरिव ॥"

(२) "पतत्पतङ्गप्रतिमस्तपोनिधिः
पुरोऽस्य यावन्न भुवि व्यलीयत ।
गिरेस्तडित्वानिव तावदुच्चकैर्
जवेन पीठादुदतिष्ठदच्युतः ॥"

(३) "लिलङ्घयिषतो लोकानलङ्घ्यानलघीयसः ।
यादवाम्भोनिधीन् रुन्धे वेलेव भवतः क्षमा ॥"

(४) "अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥"

(५) "समं समन्ततो राज्ञामापतन्तीरनीकिनीः ।
कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगाः ॥"

स्पष्टमस्ति यदेतेष्वपि पद्येषु उपमालङ्कारमाधुरी सहृदयहृदयानि साधु सम्प्रसादयति ।

**अथ अर्थगौरवम् ।**

महाकवेर्माघस्य अर्थगौरवविषयेऽपि यावत्कथ्येत तावन्न्यूनमेव । यतोहि शिशुपालवधे प्रतिसर्गमस्य अर्थगाम्भीर्यमनुभूयते । अत्र कानि-चिन्निदर्शनानि प्रस्तूयन्ते । यथा—

(१) "हरत्यघं सम्प्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥"

अस्य पद्यस्य वास्तविकार्थबोधाय भूतवर्तमानभविष्यदाख्याः त्रयोऽपि कालभेदा निभालनीया भवन्ति । यथा—मुनीनां दर्शनं भूतकालिकैः कृतैः पुण्यकर्म्मभिरेव भवति; वर्तमानकाले च तद्दर्शनं दर्शकानां पापानि परिहरति; एवं भविष्यत्कालिकीं समृद्धिमपि तत्सूचयति । भावोऽयमस्ति यत्पूर्वकृतपुण्यकर्माणि विना कोऽपि मानवो मुनिदर्शनं कर्त्तुं नैव प्रभवति; यश्च मुनिदर्शनं करोति तस्य सर्वाण्येव वर्तमानकालिकानि पापानि मुनिदर्शनसमकालमेव विनश्यन्ति; एवञ्च इदमपि तस्य कृते सुनिश्चितं बोभूयते यद् भाविकाले समृद्धिस्तमाश्लिङ्क्ष्यतीत्यादि सर्वमर्थजातं महाकविना माघेनास्मिन् पद्ये संक्षेपेण विनिवेश्य वस्तुतो घटे सिन्धुरेव प्रपूरितोऽस्तीति न मे संशयः ।

(२) "यावदर्थपदां वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥"

अर्थात्, अर्थवतीं वाणीं संक्षेपेण व्याहृत्य माधवो विरराम; यतोहि महापुरुषाः स्वभावेन एव मितभाषिणो भवन्तीति माघाशयः। एतेन स्फुटं भवति यन्मनुष्येण निरर्थकं न प्रजल्पनीयम्; वचने व्यर्थविस्तरो न विधातव्यः; सदैव सार्थकं संक्षिप्तं मितं च वक्तव्यमिति माघोपदेशः कस्य न हृद्यः ? वाक्ये अर्थगौरवस्य महिमानमङ्गीकुर्वन् स्वयमपि माघो ब्रूते यद्—

(३) "बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।
अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः ॥"

अत्र तदीयोऽभिप्रायोऽस्ति यत्सर्वतन्त्रस्वातन्त्र्यमवलम्ब्य निरर्गलं निरर्थकं स्वेच्छाचारि भाषणं तु केनापि कर्त्तुं शक्यते । किन्तु अर्थसम्बन्धसमन्वितं वाग्व्यवहारं विधातुं विरला एव जनाः समर्था जायन्ते । वस्तुतश्च मनुष्येण अनुज्झितार्थसम्बन्ध एव वाग्व्यव-

हारो विधातव्य इतिमाघाशयो विदुषां बुद्धिपटलं सुतरां विशदयतीत्यत्र मनागपि न संशयः ।

यद्यप्येतादृशानि अर्थगौरवान्वितानि अनेकानि पद्यप्रसूनानि विकसितानि विलोक्यन्ते तदीये शिशुपालवधाख्यमहाकाव्योद्याने, तथापि समयसीमानमनुभूय उपर्युक्तानि त्रीण्येव व्याख्यापुरस्सरं प्रस्तुत्य, अग्रे कतिपयानि व्याख्यां विनैव भवन्तयनयोरूपहरामि । यथा—

(१) "उपप्लुतं पातुमदो मदोद्धतैस्
त्वमेव विश्वम्भर ! विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः
क्षपातमस्काण्डमलीमसं नभः ।।"

(२) "बलावलेपादधुनापि पूर्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा ।
सतीव योषित् प्रकृतिः सुनिश्चला
पुमांसमभ्येति भवान्तरेष्वपि ।।"

(३) "यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः ।
वयं हनाम द्विषतः सर्वः स्वार्थं समीहते ।।"

(४) "बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ।।"

(५) "दृष्टोऽपि शैलः स मुहुर्मुरारे—
रपूर्ववद्‌ विस्मयमाततान ।
क्षणे क्षणे यन्नवतामुपैति
तदेव रूपं रमणीयतायाः ।।"

(६) "तनुरुहाणि पुरो विजितध्वनेर्
धवलपक्षविहङ्गमकूजितैः ।
जगलुरक्षमयेव शिखण्डिनः
परिभवोऽरिभवो हि सुदुःसहः ।"

(७) "प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे ।
अनुहुङ्कुरुते घनध्वनिं नहि गोमायुरुतानि केसरी ।।"

इत्येतेषु समस्तेष्वेव पद्यप्रसूनेषु अर्थगौरवगन्धो विद्वन्मिलिन्दैरवश्यमेव अनुभविष्यते, इति मदीयो द्रढीयान् प्रत्ययोऽस्ति ।

अथ पदलालित्यम्

माघकविताकामिन्याः पदलालित्यन्तु रमणीरामणीयकमिव सर्वथंव रमणीयमस्ति । यादृशी रसपेशला, श्रुतिकोमला, ललितविन्यासा, रसभावादिविभूषिता, रीतिरूषिता, अलङ्कारालङ्कृता च शब्दशय्या महाकवेर्माघस्य काव्यबन्धे नयनविषयीभवति, तादृशी, मन्येऽहम्, नान्यस्य कस्यापि कवेरस्ति । अत्र संक्षेपेण एतदीयपदलालित्यललितानि कतिपयानि पद्यानि प्रस्तूयन्ते यथा—

(१) "निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा
लसद्बिसच्छेदसिताङ्गसङ्गिना ।
चकासतं चारुचमूरुचर्मणा
कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥"

(२) महामहानीलशिलारुचः पुरो
निषेदिवान् कंसकृषः स विष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चकै—
रचूचुरच्चन्द्रमसोऽभिरामताम् ॥"

(३) "स काञ्चने यत्र मुनेरनुज्ञया
नवाम्बुदश्यामतनुर्न्यविक्षत ।
जिगाय जम्बूजनितश्रियः श्रियं
सुमेरुशृङ्गस्य तदा तदासनम् ॥"

(४) पुरोमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः
विगृह्य चक्रेन सुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः ।

(५) "निशान्तनारीपरिधानधूननस्फुटागसाप्यूरुषु लोलचक्षुषः ।
प्रियेण तस्यानपराधबाधिताः प्रकम्पनेनानुचकम्पिरे सुराः ।

एतेषु श्लोकेशेषु एकदेशव्यापि लालित्यं लभ्यते । सर्वदेशव्यापिनो लालित्यस्य दर्शनं तदीयेषु निम्नलिखितेषु पद्येषु कर्त्तुं शक्यते । यथाहि—

(१) "नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः ।'

(२) "वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ।'

(३) "मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥"

इत्यादिषु पद्येषु श्रुतिमधुराणां रसभावादिविभूषितानां च वर्णानां शब्दानां वा पौनःपुन्येन यो ललितप्रयोगो विहितो विद्यते, स नितरामेव रम्यश्चेतश्चमत्कारकश्च । इमानि पद्यप्रसूनानि पाठकानां हृदयोद्याने नूनमेव आनन्दपरिमलमिव विकिरन्ति; एतेषां च ध्वनिस्तत्र संगीतलहरीमिव जनयति; अमन्दानन्दसन्दोहमिव च समावेशयतीत्यत्र केषामपि धीजुषां विसंवादो नास्ति ।

उपसंहारः

यद्यपि उपमायां कालिदासस्य, अर्थगौरवे भारवेः, पदलालित्ये च दण्डिनो नाम महतादरेण गृह्यते, किन्तु उपरि विहितेन विश्लेषणेन इदं सुतरां सिद्ध्यति यन्माघस्यापि उपमाः उपमाचार्यस्य कालिदासस्य उपमाभ्यः कथमपि हीनमहत्त्वा नैव सन्ति । एवमेव च तदीयमर्थगौरवमपि अर्थगौरवगुरोर्भारवेरर्थगौरवात् कथमपि हीनगौरवं नास्ति । पुनः पदलालित्ये तु स सर्वथा अनुपम एव विद्यते । यतोहि पदलालित्ये स न केवलं पदलालित्याचार्यं दण्डिनमेव, अपितु सर्वानेव महाकवीनतिशेतेतमामित्यत्र सुविचारजुषां निष्पक्षविदुषां केषामपि वैमत्यं भवितुं नार्हति । अत एवाहं मन्ये यत्केनचिदेतत्समीचीनमेव कथितमस्ति यद्—

"उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥"

इत्यलं भुक्तिस्वति मत्या च अत्रैवाहं विरमाम्यपि विस्तरात् ।

## कालिदासस्य सर्वस्वमभिज्ञानशकुन्तलम्

**कवि पद्मदिनेशाय भारतीवैभवाय च ।**
**मनोनैराश्यनाशाय कालिदासाय मे नमः ॥**

सम्प्रति पौरस्त्येषु दाक्षिणात्येषु पाश्चात्येषु उदीच्येषु वा सुतरां शिक्षितेषु जनेषु एतादृशः कश्चिदपि विदितदेववाग्वाङ्मयो विपश्चिन्नास्ति, यः खलु संस्कृतसाहित्याकाशे देदीप्यमानदिवाकरस्य कविता-निशानिशाकरस्य काव्यरत्नाकरस्य सर्वतो लब्धसमादरस्य कालिदासस्य सहृदयहृदयाह्लादकेन अभिज्ञानशाकुन्तलनामकेन विश्वविख्यातेन नाटकेन परिचितः प्रभावितश्च नैव भूतो भवेत् । तत्रभवानयं महाकविकालिदासः ईशुपूर्वमाद्यशतके स्वकीयजनुषा भारतभूमिमलङ्कुर्वन् दिशि दिशि विकीर्णविक्रमस्य महेन्द्रोपमस्य विक्रमादित्यस्य सभारत्नमासीत् । यथोक्तमपि—

"धन्वन्तरिक्षपणकामरसिंहशङ्कु—
वेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥"

प्रथितपराक्रमेण विक्रमेण सश्रद्धं साभिनिवेशञ्च समाद्रियमाणो देववाणीभूषणो विमलकविताकामिनीरमणो महाकविकालिदासो रघुवंशकुमारसम्भवनामधेये उभे महाकाव्ये, अभिज्ञानशाकुन्तल-विक्रमोर्वशीय-मालविकाग्निमित्रनामानि त्रीणि नाटकानि मेघदूताभिधानमेकं सन्देशकाव्यं तथा ऋतुसंहारसंज्ञमेकं प्रबन्धकाव्यं विरचयामास ।

यदि सहृदयहृदयरञ्जकस्य ब्रह्मानन्दसहोदरभूतानन्ददायकस्य रसिकजनमनोहरस्य सत्काव्यस्य वास्तविकं दर्शनं केनापि कर्त्तु-

मिष्यते, तर्हि तेन कविकुलकैरवचन्द्रस्य चन्द्रार्धचूडामणिचरण-कमलचञ्चरीकस्य कविताकामिनीहासस्य देववाणीविलासस्य महाकविकालिदासस्य विश्वविदितायां दिग्दिगन्तप्रथितकलितकीर्तिलतायां त्रिलोकीललामभूतायां काव्यवाटिकायां स्वीयो मनोमिलिन्दोऽवश्यमेव नेयः। यतो हि तस्यामनल्पेषु स्थलेषु भव्यभावपरिमलानि, भाषासौष्ठवकोरकाणि यमकोपमाद्यलंकारवर्णानि, नानाविधानि काव्यकुसुमानि रसानुभूतिनासिकापथेन समाघ्राय सः सुतरां तृप्तो भविष्यतीत्यत्र नास्ति कथमपि कोऽपि शङ्कावकाशः।

अत्र 'कालिदासस्य सर्वस्वमभिज्ञानशकुन्तलम्' इतिविषयमधिकृत्य विलिख्यमानेऽस्मिन् निबन्धे सर्वप्रथमं संक्षेपेण तत्कथावस्तु एव सकलोपदेशदानदक्षाणां भवतां पुरस्तात् प्रस्तूयते—

हस्तिनापुरीवास्तव्यो महाराजो दुष्यन्तो मृगयाव्याजेन विपिनं गतो हरिणमेकमालोक्य तज्जिघांसया शरं सन्दधे। परं वैखानससम्प्रार्थनया संहृतशरो महर्षिकण्वाश्रमं प्रविवेश। तत्र च रूपसौन्दर्यतिरस्कृतराजरमणीनाम् शकुन्तलानसूयाप्रियंवदानाम् आतिथ्याङ्गीकरणसमकालमेव शकुन्तलायां साभिलाषो वभूव। गृहीततत्तनुलतोत्पत्तिपरिचयश्च सः स्वस्मिन् सकामया तया शकुन्तलया सह कण्वाभावे सखीजनानुमोदितः सवनावनव्याजेन आश्रमे एव विहितावासः कतिपयान् दिवसान् रेमे। भूयश्च स्वनामाङ्कितां मुद्रिकां तस्यै दत्त्वा राजधानीमागतो दुर्वाससः शापात् विसस्मार स्वस्मरस्थलीं तां शकुन्तलाम्। इतश्च तीर्थात्प्रत्यागतो महर्षिकण्वोऽग्निदेवात् शकुन्तलां दुष्यन्तेनाहितरेतसं विदित्वा तां तस्मै शुभे दिने विससर्ज। परं शापेनास्तङ्गमितस्मृतिः दुष्यन्तस्तां प्रत्याचचक्षे। शकुन्तला च स्नानवेलायाम् अप्सरस्तीर्थे स्वकराङ्गुलेः स्खलितां तां दुष्यन्तदत्तां मुद्रिकां दर्शयितुमक्षमा रुदती मिथ्याकलङ्कपङ्कातङ्किताववनतमस्तका सती अरष्टशरीरया मेनकया स्वाङ्कमारोप्य महर्षिमारीचाश्रमे नीता। एकदा एकस्माद् धीवरात् समुपलब्धतन्मुद्रिकः अतएव विगतशापत्वाल्लब्धशकुन्तलाप्रणयपरिणयस्मृतिः दुष्यन्तो दूनस्वान्तोऽनारतं तां सस्मार। पुनरेकदा देवराजप्रहितो मातलिरेनं नाकावनाय निनाय। ततो लब्धवि-

जयादरोऽयमर्धमार्गे मारीचाश्रमे पुत्रप्राप्तिपुरस्सरं स्वप्राणप्रेयसीं प्रियामपि पुनः प्रापेति तत्सारः।

अस्यां सहृदयहृदयहारिण्यां मनोरमकथासुधाशीकरवर्षिण्यां मनोनैराश्यधर्षिण्यां नाटककृतिपुष्करिण्यां समन्तादेव भावमकरन्दपूरितानि मधुराणि प्रसंगप्रसूनानि विकसितानि दरीदृश्यन्ते।

सर्वप्रथमं नान्दीवर्णने महाकविरयं स्वीयं परमशैवत्वं स्वग्रथ्यमाननाट्यकृतिकथावस्तु च समभिव्यनक्ति। तदनन्तरं चास्मिन् क्वचिद्स्माभिः सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः प्रच्छायसुलभनिद्राः परिणामरमणीया दिवसा लभ्यन्ते; क्वचिच्च रमणीरमणीये समये सुकुमारकेसरशिखानि भ्रमरैरीषदीषच्चुम्बितानि शिरीषकुसुमानि सदयं कर्णालङ्कारीकुर्वाणा मदिरेक्षणाः दृश्यन्ते। तदनुपदमेव पुरुवंशावतंसस्य दुष्यन्तस्य करालनाराचसम्पातभीतिपलायमानस्य आश्रममृगस्य स्वाभाविकं वर्णनं दृग्गोचरीभवति। अग्रे चलित्वा नाटकनायिकाया आश्रमाधिदेवतायाः त्रिजगल्ललनाललामभूतायाः शकुन्तलायाः कौशेयवसनकनकालङ्कारादिरूपसौन्दर्यसाधनाभावेऽपि तृणीकृतत्रिलोकीसुन्दरीसौन्दर्यसारो लोचनव्यापारो नैसर्गिकशरीरलावण्यरत्नाकरश्च नयनपथमागच्छतः।

एवञ्च—

"अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥"

इत्यत्र पीनपयोधरायां पाटलाधरायां सरसशाखोपमभुजलतायां नायिकायां प्रफुल्लकुसुमयुगलाया अरुणकिसलयायाः पेशलविटपाया लतायाः समारोपः कस्य न सरसहृदयस्य मनो मयूरं वर्षाकाले मेघशब्द इव नन्दयति ? ईषदग्रेऽस्मिन्नेव नायिकाक्रियाकलापे भ्रमराभिलङ्घनभीताया इतस्ततः प्रेरितवामलोचनायाश्चङ्क्रमणपरायणायाश्च अत एव नर्तकीभूतायाः वेगोच्छ्वसितपयोधरायाः शकुन्तलायाः हावभावभूषिता मनोदशा दर्शकानां हृदयपटले एकामविस्मरणीयां रमणीयां स्मृतिततिं समङ्कयति। अस्मिन् दृश्ये दर्शकाः शकुन्तलाया समं स्वीयं हृद्यं सम्बन्धमाबध्नन्ति। पुनरग्रे—

"अनाघ्रातं पुष्पं किसलयमलूनं कररुहै—
रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥"

इत्यस्मिन् पद्ये काव्यकारणनिधिना महाकविना नायिकाया न केवलं लावण्यस्यैव कीर्त्तनं कृतम्, अपितु तस्याः पावनत्वस्यापि महिमा गीतोऽस्ति। तृतीयेऽङ्के शकुन्तलाप्रणयप्राप्तये व्याकुलायमानमानसस्य नायकस्य दुष्यन्तस्य मुखपद्माद्विनिःसृताः भावपरिमला अखिलानपि प्रेक्षकान् समाकष्टुं क्षमन्तेतमाम्। उदाहरणार्थं पद्यमेकं प्रस्तूयते—

"तव कुसुमशरत्वं शीतरश्मित्वमिन्दोर्
द्वयमिदमयथार्थं दृश्यते मद्विधेषु
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैस्
त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥"

अस्मिन् पद्ये प्रियावियोगानलदन्दह्यमानस्वान्तस्य दुष्यन्तस्य कुसुमचापं कामदेवं प्रति करुणोऽयमालापः सहृदयानां हृदयं संस्पृशति। अहो! तत्कृते शीतांशुरिन्दुरग्निवर्षी जातः, कुसुमशरस्य च शराः पवीभूताः सन्ति। कथन्न स्यात्? वियोगे रम्यमपि वस्तुजातं दुःखयति उद्दीपनविभावत्वात्।

न केवल नायकस्यैव दशेयम्, अपितु पत्राणां शोषणेन भीषणेन परमोष्णेन समीरेण संस्पृष्टाया माधवीलताया इव नायिकायाः शकुन्तलाया अपि प्रियविरहव्यथा प्रेक्षकाणां मानसपटलं नैव जहाति। अत्र सर्वत्रैव महाकविना रसराजस्य शृङ्गाररसस्य साम्राज्य संदर्श्य लोकानां कोमला हृदयकलिका संस्पृष्टा कम्पिता चास्ति, इत्यत्र न कापि संशीतिः। विद्वांसो विदन्त्येव यत्—

"काव्येषु नाटकं रम्यं नाटकेषु शकुन्तला।
तत्रापि चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥
यास्यत्यद्येति तत्रापि श्लोकः सर्वमनोहरः।"

अत एवात्र संक्षेपेण चतुर्थाङ्के लभ्यमानस्य सर्वतोभावेन सर्वैः सहृदयैः प्रशस्यमानस्य श्लोकचतुष्टयस्यापि चमत्कारः प्रस्तूयते। यथाहि—

सोमतीर्थात्प्रत्यागतो मुनिः कण्वः पुत्रीं शकुन्तलां दुष्यन्तेनाहितवीर्याम् अत एव समापन्नसत्त्वामालोक्य सस्नेहं तां तस्मै विसृजन् तनयाविश्लेषविक्लवीकृतकायो मनसि चिन्तयति—

"यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,
कण्ठः स्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः,
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥

श्लोकचतुष्टयस्य प्रथमेऽस्मिन् श्लोके महाकविना प्रकटितमस्ति यल्लोके तनयाभिनवविश्लेषदुःखं महाकष्टकरं भवति। तत्तु विपिनौकसां महर्षीणामपि चेतसि खेदं जनयति, गार्हस्थ्यजुषां तु कथा एव कास्ति।

शकुन्तलायाः पतिगृहगमनवेलायां तत्पिता कण्वो वृक्षान् वक्ति यत्तेऽपि तामनुजानन्तु—

"पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥'

अस्मिन् द्वितीये श्लोके आश्रमवृक्षान् प्रति शकुन्तलायाः भ्रातृभावः, अतएव तेषु तस्याः स्नेहातिशयः, अत एव च तदनुज्ञाग्रहणमिति साधीयसी कल्पना कवेः। यतोहि कापि भारतीया नवा वधूटी स्वीयभ्रातॄननुनीय तैरनाज्ञप्ता च प्रेयसोऽपि पत्युर्गृहं नैव जिगमिषति। स्पष्टमस्ति यत् शकुन्तलाया आश्रममहीरुहेषु एव सहोदरस्नेह आसीत्, इति ज्ञापयितुमेव कालिदासेन इयमुद्भावना कृतास्ति। अग्रे चलित्वा महर्षिकण्वो जामातरं दुष्यन्तं सन्दिशति—

"अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मनस्

त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया,
भाग्यायत्तमतः परं न खलु तद् वाच्यं वधूबन्धुभिः ॥'

अस्मिन् तृतीयस्मिन् श्लोके लोकपालकं पुरुवंशसंचालकं स्वजामातरं दुष्यन्तं प्रति स्वसन्देशप्रेषणे महीयस्त्वेऽपि आत्मनः क्षोदीयस्त्वप्रदर्शनं महर्षिकण्वस्य विमलहृदयविशालतामेव संसूचयति । सर्वे पितरः स्वकीयकन्यां पतिमनोऽनुकूलां सम्पन्नां च दिदृक्षन्ते । अतएव ते दायं दत्वा जामातरं प्रसादयन्ति । प्राक्तने काले महर्षिकण्वेऽपि विचारोऽयं विलसतीति कविकौशलं कस्य न चेतो हरति ? अन्ते गत्वा पिता कण्वः पुत्र्यै शकुन्तलायै शिक्षां ददाति—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
पत्युर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥

कविकुलगुरोरस्मिंश्चतुर्थे श्लोके प्राकाश्यमायाता अभिनववधूपदेशदानदक्षता अद्यास्मिन्नाधुनिके युगेऽपि सर्वेषामेव चेतांसि चमत्करोति । वस्तुतो नात्र संशयो यत् श्वश्रूश्वसुरयोः सेवा, प्रियसखीष्विव सपत्नीषु व्यवहारः, परिजने मृदुता, सम्पदि गर्वाभावः, कुपितेऽपि पत्यौ आनुकूल्यञ्चेतीमानि सर्वाणि वैशिष्ट्यानि नारीजीवने परमोपकारकाणि सुखशान्तिदायकानि च भवन्ति । अत एव अस्मात् श्लोकात् कापि नवोढा वधूः शिक्षां गृहीत्वा स्वपतिगेहे गृहलक्ष्मीपदं प्राप्तुं शक्नोति ।

अहं पश्यामि यत् शकुन्तलापतिगृहगमनकाले तत्राश्रमस्थानां सचेतनानामचेतनानामशेषाणामेव दशा हृदयसंस्पर्शिनी विद्यते । नतोन्नतभूमिभागे स्वाश्रमपरिसरे कथञ्चित्प्रयान्तीं जीवनदायिनीं शकुन्तलां दुकूले गृह्णतो मनोव्याकुलतां च दर्शयतः श्यामाकमुष्टिपरिवर्धितकस्य मृगशावकस्य, उटजपर्यन्तचारिण्या आसन्नप्रसवाया हरिण्याः, उद्गीर्णदर्भकवलानां मृगानाम्, परित्यक्तनर्त्तनानां मयूराणाम्, अपसृतपाण्डुपत्ररूपाश्रुबिन्दूनां लतानां च शकुन्तलावियोगे दीनां

दशां दर्शं दर्शं सचेतसः कस्य मनो न दूयते ? निश्चयेनैव वक्तुमिदं शक्यते यन्महाकविरयं शारदाया वरदकरकमलच्छायामाश्रितः सन् यथाभिमतं हृदयावर्जकं मनोविज्ञानानुरूपं च दृश्यमुपस्थाप्य प्रेक्षावतां मनोमयूरमात्मसात्करोति । एवमेव

**"अर्थो हि कन्या परकीय एव तामद्य सम्प्रेष्य परिग्रहीतुः ।**
**जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ॥"**

इति पद्यं समाप्ततनयाविवाहमहोत्सवस्य सांसारिकस्य पितुः विगतचिन्तत्वं सम्यक् पुष्णाति । किन्नेदं कविकौशलम् ? अपि नेदं हृदयसंस्पर्शि ? किं किन्न लिखित कविकुलगुरुणा ? तदीया लेखनी नूननेव लोकोत्तरा नरीवृत्यते स्म ।

अथ षष्ठेऽङ्के प्रियावियोगानलदग्धचित्तो विदूषकद्वितीयो दुष्यन्तो निजाङ्कितां प्रियाप्रतिकृतिं वैशिष्ट्येन चित्रयितुमीहमानो विदूषकं बोधयति यत्—

**'कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी**
**पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।**
**शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः**
**शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥"**

एष श्लोकस्तदीयचित्रकलाकौशलप्रदर्शने नितरां पटीयानस्ति । वस्तुतो हि कृष्णमृगस्य शृङ्गे स्वीयं वामनयनं कण्डूयमानाया मृगाङ्गनायाश्चित्रणं मृगीनिष्ठं स्वमृगं प्रति प्रतीतिभावं तथा अतएव तस्याः रिरंसाभावं साधु ध्वनति । इतरच्चाशेषं चित्रणं तत्प्रदेशस्य शान्तत्वं द्योतयतितमाम् । एतदग्रे सप्तमेऽङ्के—

**"शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी**
**पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।**
**सन्तानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः**
**केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥"**

अस्मिन् श्लोके प्रतीयते यत्कालिदासो वायुयानयात्रायामनुभूयमानाभ्यामारोहावरोहाभ्यां लब्धपरिचयो ववृते । इतरथा इत्यङ्कारमीदृशं सरलं स्वाभाविकं च वर्णनं कर्त्तुं कथमपि न पारयामास ।

एवञ्च मारीचाश्रमस्य तु कथा एव वाचामगोचरास्ति। तत्र खलु कल्पवृक्षेषु सत्स्वपि प्राणवायुनैव प्राणानां परिपालनमक्रियत; कमलमकरन्दपरिमले जले स्नानविधिरेव समपाद्यत, न तु विहारः। अहो संयमस्य अनिर्वचनीयता ? पराकाष्ठा च त्यागस्य ? धन्यो हि कविकुलगुरुः, धन्यञ्च तस्येदं दृश्यकाव्यम्।

अन्ततो गत्वा तेन शकुन्तलादुष्यन्तयोः पुनर्मिलनमपि चमत्कारिण्या सरण्या कारितमस्ति। एवं हि तेनास्मिन् नाटके जीवनस्य विविधानंशान् व्याख्याय समाजाय शाश्वतिकः सन्देशो दत्तोऽस्ति यद् अज्ञातहृदयशीलेन सह सौहार्दं नहि सर्वदा सुखायैव भवति, कदाचिदनर्थाय दुःखाय चापि भवति, तथा अल्पीयानपि अपराधो जनं महान्तं क्लेशं साहयति। गुरुवचोऽवधीर्य च मनुष्यो दुष्यन्त इव दुःखितो भवति। अतोऽहमनुभवामि यद्—

**"न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।**
**न तत्कर्म न योगोऽसौ नाट्येऽस्मिन् यन्न दृश्यते॥**

इत्यस्या भरतमुनिसूक्तेः विपुलांशोऽस्मिन् अभिज्ञानशाकुन्तले संसिद्ध्यति। मन्ये चात एव पाश्चात्यविपश्चिद्वरो गेटेमहोदयः कालिदासस्य अनेन नाटकेन प्रभावितो भूत्वा नृत्यन् व्याजहार यत्—

"Wouldst thou the young years' blossoms
and the fruits of its decline,
And all by which the soul is charmed,
enraptured, feasted, fed ?
wouldst thou the earth and heaven itself
in one sole name combine ?
name thee, O Shakuntala, and all
at once is said."

अस्यानुवादं कुर्वता महामहोपाध्यायेन डॉ० वासुदेव विष्णुमिराशिना लिखितमस्ति यद्—

**"वासन्तं कुसुमं फलं च युगपद् ग्रीष्मस्य सर्वं च यद्**
**यच्चान्यन्मनसो रसायनमतः सन्तर्पणं मोहनम्।**

एकीभूतमभूतपूर्वमथवा स्वर्लोकभूलोकयो—
रैश्वर्यं यदि वाञ्छसि प्रिय सखे ! शाकुन्तलं सेव्यताम् ॥"

अतश्चैतत्सर्वङ्किचदालोकमालोकमहन्तु इदं मन्ये यत्कालिदासीयमभिज्ञानशाकुन्तलं निश्चयेनैव संस्कृतसाहित्यस्य अनुपमो निधिरस्ति तथा तद्विषये इदं समीचीनमेव कथ्यते यत्—

"कालिदासस्य सर्वस्वमभिज्ञानशकुन्तलम् ।"

किन्त्वहन्तु इदमनुभवामि यद् अभिज्ञानशाकुन्तलं न केवल कालिदासस्यैव, नवा केवलं संस्कृतसाहित्यस्यैव, अपितु समस्तस्य विश्ववाङ्मयस्य सर्वस्वं वरीवृत्यते। अतस्तत्स्वाध्यायोऽपि विश्वजनीनो भविष्यतीति दिक् ।

## कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा ?

प्रस्तुतायां परीक्ष्यमाणायामालोच्यमानायाञ्चैतस्यां सूक्ति-मुक्तायां वयं यथा यथा विचारं कुर्मः, तथा तथा एतदीया महनीयता अपरिहरणीयता अप्रतिकरणीयता च चक्षुषोः पुरस्तात् परिस्फुरन्ती नरीनृत्यते। एतदीयं गाम्भीर्यमालोचमालोचम् आस्माकीनं चेत-श्चेतनस्याचेतनस्य उभयविधस्यापि संसरणशीलस्य संसारस्य भङ्गुरत्वेन अस्थास्नुत्वेन च भृशं परिभूयते। अद्यावधि अधिगत-याथातथ्यानां विदितवेदितव्यानां विपश्चिदपश्चिमानां मनीषिणां सकाशात् यत्किञ्चिदपि अक्षरज्ञानं समुपलब्धमस्ति, तस्यैव निर्मलेन रश्मिजालेन एतावद् ज्ञातुमपार्यत मया, यद् वस्तुतोऽस्मिन् परि-वर्तनशीले न केवले विशाले धरातले एव, अपितु निखिलेऽपि ब्रह्माण्डे एकमाद्यन्तविहीनं तुरीयचैतन्याख्यं ब्रह्मतत्त्वं परिहाय किञ्चिदपि चेतनमचेतनं वा वस्तुजातं स्थास्नु नैव दरीदृश्यते। अत एव तु कविकुलकुमुदकलाधरेण कालिदासेन स्वकीये मेघदूताख्ये सन्देश-काव्यसागरे एतद्विषयपोषिणीयं सूक्तिमुक्ता गवेषणापथमानीतास्ति। तत्र यक्षो मेघमुखेन स्वप्रेयसीं सान्त्वयितुं सूक्तिमिमामाह। वस्तुतो हि कविवरस्य सूक्ष्मतमनिरीक्षणपटीयसी शेमुषी अनया सूक्त्या प्रतिपलं परिवर्तमानस्य अस्य संसारस्य परिवर्तनशीलतां साधु सन्दि-शति। अत्र तदीयमेव तात्पर्यं विविधैः निदर्शनैः अधस्तात्प्रस्तूयते।

प्रथमं तावत्सर्ववीजानां प्रकृतिभूतां धरामेव अवलोकयामः। तदीयां प्रतिक्षणं जायमानां भौगोलिकीं विकृतिं नयनगोचरीविधाय वक्तुमीहते मामकं चेतो यदियं कालिदासीया सूक्तिः सर्वथैव अवितथा वरीवृत्यते। यतोहि वलीयानस्ति वसुन्धरायां कालक्रम-परिवर्त्तः। निदर्शनं चास्त्यत्र ऋतुपरिवर्तनम्। यतो हि कदाचिद्

दिनकरकरनिकरसन्तप्तकलेवरायां वसुन्धरायां परितो गात्रदहनशीलाः लताकिसलयशोषणलीलाः उद्दामा उष्णवाता वान्ति, तर्हि कदाचिद् वारां धारासहस्रेण पयःपूरपूरिताः कूलङ्कषाः सरितः प्रवहन्त्यो दृष्टिपथमवतरन्ति। कदाचिद् दन्तवीणोपदेशाचारचतुरेण समीरेण स्वीयशैत्यमहिम्ना चेतनमचेतनं च जडीक्रियते, तर्हि कदाचिन्नानाविधैः कमलकेतकीप्रभृतिपुष्पविशेषपरागैः सान्द्रमधुरस्य परिमलपूरपूरितस्य कोकिलकुलकूजितस्य आम्रमञ्जरीमञ्जुलस्य वसन्तकालस्य कमनीयता कामप्यनिर्वचनीयां चेतसि मुदं संवितनुते।

अस्यामेव वसुन्धरायां यदि अद्य विशालाकाशसीमान्तचुम्बिनः पर्वताः अक्षिलक्ष्यीभवन्ति, तर्हि आकस्मिकेन समापतितेन भीषणेन भूचालेन तत्रैव क्षणेन पातालमपि उपहसन्तः समुद्रायमाणाः भीषणा महागर्त्ताः नयनपथमवतरन्ति। यदि परिपूर्णचन्द्रमयूखभासुरायां राकायां विकसितानाम् इतस्ततः सर्वतः स्वीयममलं परिमलं वितन्वानानां नानाविधानां कुमुदानां श्रेण्यः समुल्लसन्ति, तर्हि जाते प्रभाते उदयति भगवति गभस्तिमति झटित्येव तेषां समेषां सुमनसां समस्तमेव वैभवं क्षणेनैव क्षीयते, सम्पूर्णं च तत्कुमुदवनं महाकविमाघशब्देषु ,अपश्रि' बोभूयते। यदि च तदानीमेव विकासमुपगच्छतां मकरन्दपानलुब्धकानां मिलिन्दानामाह्वानं कुर्वतां निखिलजनमनोनयनरञ्जकानां कमलानां कमनीया कान्तिः प्रतिक्षणं प्रसरन्ती परिलक्ष्यते, तर्हि नूनमेव दिवसेऽतीते उदिते एव निशानाथे तदीया सर्वापि दीप्तिः सर्वञ्च तदीयमाकर्षणं क्षणमात्रेणैव प्रभाततारायतेतमाम्।

नियतिनटीकौशलेनैव, विपुलवैभवसम्पन्नानां निखिलजगद्भूषणभूतानां परमस्पृहणीयानां निवासोचितसकलसुखसंहितानां नगराणां स्थाने भीमभीमा अगाधजलपूरपूरिता मकरमीनरादिविविधमारात्मकजलजीवसङ्कुला ज्वारभाटाभिधानभीषणस्थितिद्वयसंवलितवीचिपुञ्जव्याप्ताः वेलाविहीना उच्चावचवारिराशयः समुद्राः आस्पदं लभन्ते। प्रत्यूषवेलायामुदयन्तं भगवन्तं भास्वन्तं प्राचीविशालभालबिन्दुमिव सूर्यमालोक्य के नाम नैव मोदन्ते ? किन्तु उद्बोधं प्राप्नुवतां सर्वेषां जनिजुषामाह्लादपुञ्जमादाय प्रतिक्षणं प्रवर्धमानः तरुणायमानः स एव तिग्मरश्मिः अम्बरमध्यमुपभुज्य स्वैरं स्वैरं

क्षीयमाणरश्मिराशिः हीयमानप्रकाशवीचिः भवन् अन्ततोगत्वा क्रमेण पीतीभूय लोहितीभूय चाम्बरयात्रापरिश्रमम् अपनिनीषुरिव अस्ताचलचूडावलम्बितामुपगतः सन् सचेतसां चेतोविषादाय बोभूयते। कुमुदिनीनायकस्य निशानाथस्यापि उत्थानपतनपरम्परा नास्ति केषामपि उन्मुक्तप्रकृतिक्रोडक्रीडाजुषां कृते अविदिता! सोऽपि प्रतिमासं शुक्लपक्षीयायां द्वितीयायामुद्भवमासाद्य क्रमेण उपचीयमानभासुररश्मिराजिः आत्मानं परितः आत्मनो विकीर्णेन शीतलेन प्रकाशपटलेन लोकानां चेतोरञ्जनं विदधानः, प्रतिप्राङ्गणं प्रतिप्रासादञ्च मोदमुपगच्छतां क्रीडतां शिशूनां मातुलायमानः पूर्णिमायां परिपूर्णकलेवरो भवन् मानिनीनां कामिनीनां मानभञ्जको भूत्वा सर्वेषां हृदयाह्लादको बोभवीति। किन्तु स एव चन्द्रमा आगामिनि कृष्णपक्षे प्रतिनिशं परिक्षीयमाणरश्मिमालः क्रमेण अमावस्याया निविडतिमिराच्छन्नायां रजन्यां कथावशेषतां प्रयातीत्यहो अपरिहरणीयता अप्रतिकरणीयता च नियतिनटीविलासस्य!

एवमेव समायातेषु तत्तत्समुचितेषु ऋतुषु वृक्षाणां विविधवर्णविराजितपुष्पालङ्कृततां नानाविधमधुररसावसिक्तफलसम्पन्नताम्, अत एव न केवलैर्मानवैरेव, अपितु नानादिग्देशान्तरागतैः विविधैः विहङ्गैरपि अहमहमिकया संसेव्यतामक्षिलक्ष्यीकृत्य के नाम नैव मोदन्ते? किन्तु कानिचिदेव अहानि अतिक्राम्य अपगतवति तत्तदृतौ त एव पुष्पफलसम्पन्नाः विविधविहङ्गमकुलकलकूजितोपेताः वृक्षाः पुष्पफलापगमे सति जाते च पर्णवियोगे उड्डीनेषु विहङ्गमेषु अतीव नीरवाः सन्तः श्मशानवृक्षा इव कस्मैचिदपि न रोचन्ते। निश्चप्रचमेव अत्रापि कालस्यैव अकलनीयो महिमा सर्वमिदं परिवर्त्तनजातं कलयन् परिलक्ष्यते।

अथ प्रकृतिमुज्झित्वा यावदेव वयं मानवसमाजे दृष्टिपातं कुर्मः, तावदेव नियतिनटीविलासस्य अपरिहार्यता चक्षुषोः समक्षं नरीनर्तितुं प्रारभते। जीवनस्य च विविधेषु क्षेत्रेषु तदीयां महत्तां शक्तिमत्तां च दर्शं दर्शं शिलायमानमिव संजायते मामकं चेतः। यतो हि वयमालोकामहे यद् यः कदाचित् स्तनन्धयः सन् स्वकीयासु सर्वास्वपेक्षासु

किमपि न वक्तुं प्रभवति, स एव कानिचिद् वर्षाणि समतीत्य कमनीयेन युवतिजनप्रियेण कान्तेन यौवनेन परिचुम्बितदेहो द्रढिष्ठेन न केवलेन बलेन, अपितु चारुविचारप्रवाहेणापि परिव्याप्तकलेवरो भूत्वा कामपि अनिर्वचनीयां संस्पृहणीयतामभिलषणीयताञ्च समासादयति। किन्तु स एव कालान्तरे जराजीर्णकलेवरः पलितकुन्तलो विनष्टदन्तमुकुलो यष्टिलतामालम्ब्यापि पदात्पदमपि चलितुमशक्तः सन् दर्शकानां मनोम्लानये अलं बोभूयते। मानवजीवनस्य इमाः तिस्रोऽप्यवस्थाः करालस्य कालचक्रस्य महिमानमेव ध्वनयन्तीत्यत्र न कोऽपि संशीतिलेशः। समाजे यदि अद्य कश्चिद् विपुलवैभवविलाससम्पन्नः परिचाल्यमाननानाविधयन्त्रालयो दिग्दिगन्तेषु च लब्धयशाः भवति, तर्हि स एव कदाचिदकस्माद् दैवदुर्विपाकाद् आहोस्वित्कयाचिल्लौकिक्या परिस्थित्या प्रणष्टाखिलव्यवसायः सन्नेकैकस्याः काणवराटिकाया अपि कृते इतस्ततो बम्भ्रम्यमाणो द्वाराद् द्वारमवेक्षमाणो वराकस्तदीयपूर्वजीवनविलासदर्शकानां जनानां चेतोविषादाय संजायते।

एवञ्च लक्ष्यते लोके यत्—कदाचिद् हर्षसिन्धुः, कदाचिद् विपद्वारिधिः; कदाचित् क्षरत्सर्पींषि अपूपादीनि विविधानि मधुराणि सुपक्वान्नानि, कदाचिद् दन्तारातिभूता मुष्टिमेया नीरसाश्चणकाः; कदाचित् कमनीयचन्द्रोज्ज्वला हिमधवला सुस्निग्धा सुसौरभा सकान्ता शय्या, कदाचिद् उच्चावचानि रूक्षाणि अहृद्यगन्धानि विकान्तानि शिलातलानि; कदाचित् प्रणयपूर्णपरिणयकालीनविविधानां चेतोहराणां वाद्यध्वनीनां श्रुतिसुखदः परीवाहः, कदाचिच्च मृत्युकालीनानां कर्णकर्कशानां स्वजनसम्बन्धिकरुणपरिदेवनानां हृदयविदारको नयनजलमोचको नितराममानसीनः परिपूरः। एवमेव कदाचित् नितान्तमसृणानि परिमलपूरसुवासितानि चेतोरञ्जकरङ्गरञ्जितानि कौशेयवसनानि धारयितुं लभ्यन्ते, तर्हि कदाचिन्नानाविधक्षुद्रच्छिद्रक्षुरिता लज्जास्पदभूता दारिद्र्यद्योतिका कन्थैवैका तनोः रक्षणाय आच्छादनाय च प्राप्यते; कदाचिच्चेतोरञ्जिका नानाभिदाः स्तुतिवाचः श्रोतुमुपलभ्यन्ते, तर्हि कदाचिद् हृदयोद्वेगविधायिका अवाञ्छनीया निन्दाततयः पीडयन्ति; कदाचित् सर्वविधसुखदवस्तुजातविराजिता नानारागरञ्जिता मधुरध्वनिध्वनिताः सुवासिताः

प्रासादाः सत्कुर्वन्ति, तर्हि कदाचित् सिंहव्याघ्रभल्लूकनागादिभीषणः जीवजन्तुपुञ्जपरिपूर्णा मर्मान्तकपीडाप्रदकण्टकाकीर्णमार्गा भीमभीमा महाटवी एव शरणं ददाति; कदाचित् कर्पूरान्वितं सुगन्धितं सुमधुरं सुधोपमं पेयं पयश्चेतः प्रीणयति, तर्हि कदाचिन्नदीतीरजातमहीरुह-शाखापतितपीतपत्रपुञ्जपूतीनि पङ्किलानि कषायाणि च नगापगाया जलान्यपि दुर्लभानि जायन्ते। एतेन विवरणेन विशदीभवति यदयं संसारो द्वन्द्वात्मकोऽस्ति। अत्र लभ्यानि सुखानि दुःखानि च परिवर्तनशीलानि सन्ति।

अथात्र विषयेऽस्मिन् कैश्चिदाप्तमहानुभावैः समीरितानि कानिचिद् वचनानि प्रमाणार्थं समुद्ध्रियन्ते। यथाहि—'कालक्रमेण जगतः परिवर्तमाना, चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः।' इति नाटककारस्य महाकविभासस्य, 'अतोऽपि नैकान्तसुखोऽस्ति कश्चिन्नैकान्तदुःखः पुरुषः पृथिव्याम्।' इतिमहाकवेरश्वघोषस्य, 'चक्रवत् परिवर्त्तन्ते दुःखानि च सुखानि च।' इति पञ्चतन्त्रकारस्य श्रीविष्णु शर्म्मणः, 'खोलता जन्म इधर लोचन, मूँदती मृत्यु उधर क्षण क्षण' इतिहिन्दीसाहित्यकारस्य महाकविसुमित्रानन्दनपन्तस्य, तथा 'If winter comes can spring be far behind' (अर्थात्' यदि-शीतर्त्तुरायाति वसन्तोऽप्यनुयाति तम्) इति पाश्चात्त्यसाहित्यकारस्य शैलेमहाभागस्य प्रस्तुतसूक्तिसमर्थकानि वचनानि चारुचेतसां विचारजुषां विदुषां चेतसि जागतिकभङ्गुरत्वबोधाय विवेकलाभाय वा पर्याप्तानि सन्ति। महाकविकालिदासोऽपि स्वीयामिमां सूक्तिं समर्थयन् एतदनुपदमेव कथयामास यद् 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' अस्मिन् प्रसंगे 'दशा नराणां न सदैकरूपाः' इत्यज्ञातनामधेयस्यापि, कस्यचिद् विदुषो वाक्यं संगच्छतेतमाम्।

उदाहरणार्थमेतस्मिन् सन्दर्भे देवराजस्य इन्द्रस्य, शैव्या-हरिश्चन्द्रयोः, दमयन्तीनलयोः, सीता-रामयोः, महर्षि वाल्मीकेः, लङ्कापतेः रावणस्य, पाण्डवानां, कौरवाणां, यादवानां, कालिदासस्य, चन्द्रगुप्तस्य, चाणक्यस्य, नन्दस्य, महाराणाप्रतापस्य, क्षत्रपतिशिवाजेः, संस्कृतभाषायाः, भारतदेशस्य च नामानि निर्विवादं ग्रहीतुं शक्यन्ते। एतेषां समेषामेव जीवनानि हर्ष-विषादयोः, सुख-दुःखयोः, उत्थान-

पतनयोः दशासु दोलायमानान्यभूवन्नित्यत्र केषामपीतिहासजुषां विसंव्वादो नास्ति ।

एतेषामुपरिनिर्दिष्टानां सर्वेषामेव महापुरुषाणां संसारसागरे विविधपरिस्थितिवीचिराशिपरिचाल्यमानां जीवनतरीमालोकमालोकं श्रावं श्रावं वा महाविपद्ग्रस्तोऽपि भीषणभीतिभीतोऽपि पुरुषः ईषत्सन्तोषं लभते । निराशाभावसमुद्रे सम्पतितानां निमज्जनोन्मज्जनपरम्पराभिभूतानां जनानां कृते अधिगतजागतिकयाथातथ्यस्य महाकविकालिदासस्य प्रस्तुतेयं सूक्तिः सम्यगेव नौकायते । अत एव तु कुबेरशापग्रस्तो यक्षः प्रियावियोगानलदग्धमानसो भूत्वापि रामगिर्याश्रमेषु स्वीयं शापावधिमस्या एव सूक्तिलतायाः आश्रयेण समाप्नोत् ।

वस्तुतः कालिदासस्य सूक्तिरियं जनेषु आशायाः सञ्चारं चरीकर्त्ति । मानवेन आशा न त्याज्या; नैराश्यं च नालम्बनीयम् । संसारे सुखानि दुःखानि च आयान्ति यान्ति च; तेष्वासक्तिर्नैव विधेया, तत्र चिन्ता च नैव करणीया । यदि अद्याहं दुःखी अस्मि, तर्हि मया स्वीयं धैर्यं नैव त्याज्यम् । यतोहि दुःखाभावे सुखस्य मूल्यं न भवति, न च सुखाभावे दुःखस्य । एतस्मादेव हेतोः संसारे भावानां द्वन्द्वात्मकं द्वैविध्यं दरीदृश्यते । प्रतीयते यदनया सूक्तिमुक्तया कविवरेण कालिदासेन अद्वैतवादस्य मधुरस्तिरस्कारोऽकारि । तदीयोऽयमभिप्रायोऽस्ति यत्सांसारिकाणां भावानां दशानां च सदैव एकरूपता नैव सन्तिष्ठते । अतोऽस्माभिः स्वीये जीवने यथागते शुभे अशुभे वा भावे धीरतया एव व्यवहर्त्तव्यम् तथा कदाचिदपि कीदृश्याश्चिदपि कस्याश्चिदपि च विपदो भीतैर्नैव भवितव्यम् । मन्ये, अयमेव सन्देशोऽस्माकं कृते महाकविना कालिदासेन स्वीयायामेतस्यां सूक्तिमुक्तायां निहितोऽस्तीत्यलं पल्लवितेन ।

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ।।

क्षिप्रकारिताप्रधाने अस्मिन् विश्वस्मिन् अतिविरला एव केचन कर्त्तव्याकर्त्तव्यविचारविमर्शसम्पन्नशेमुषीजुषो विद्वांसो विद्यन्ते, ये नाम क्रियमाणस्य करिष्यमाणस्य वा यस्य कस्यापि कार्यस्य करणात्प्राक् तदीयां करणीयतामकरणीयताञ्च निभालं निभालं मेधापुरस्सरं तत्र तत्र करणीये एव कार्ये प्रवर्तन्ते । अन्यथा तु प्रायेण जनाः अतिरभसकारिणः एव दरीदृश्यन्ते । एतादृशाः जनास्तु कालस्य वहुमूल्यवत्तामल्पिष्ठतां च संसाध्य क्रियमाणे करिष्यमाणे वा कर्मणि त्वरामेव साधीयसीं मन्यन्ते । इत्थं च जगति विमृश्यकारिणां रभसकारिणां चेत्युभयविधानां जनानां समवायो लोचनपथमवतरति ।

यद्यपि सूक्ष्मेक्षिकया पक्षपातराहित्यपुरस्सरं यदि भ्रान्तिविहीनो विचारो विधीयेत, तदा तु संस्कृतमहाकाव्यानां वृहत्त्रय्यां समुपलब्धप्रतिष्ठस्य विद्वन्मण्डलमण्डनस्य 'किरातार्जुनीयम्' इत्याख्यस्य महाकाव्यस्य प्रणेतुः महाकवेः भारवेः हृदयसागरात् समुद्गता—

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ।।

इत्येवंरूपा सर्वथा भासुरा सूक्तिमुक्ता समेषामेव शेमुषीजुषां विदुषां समभिमतास्तीत्यत्र नास्ति कापि संशीतिकणिका; तथापि अलोच्यमानस्य विषयस्य औचितीमनौचितीं वा साधयतां सतामेतत् कर्त्तव्यमेव भवति यत्ते विषयस्य वाह्यमन्तरङ्गं च पक्षं पोषं पोषं नानाविधैर्निदर्शनैः स्वकीयमालोच्यमानं विषयं पूर्णतया संसिद्धिपथं प्रापयेयुः । अत एव मयाप्यत्र तदर्थं यथामति प्रयत्नो विधीयते । यथाहि—

प्रथमन्तु आलोच्यमानसूक्तिमुक्तोपादेयता एव तावदत्र प्रस्तूयते। आसीत्किलैको भुवि कुबेरायमाणो विपुलसम्पत्तिसम्पन्नो जायासहायः कश्चित् श्रेष्ठी। दैनन्दिनेन स्वीयेन व्यापारलाभेन सन्तोषमलभमानः स एकदा षाण्मासिकेन गर्भेण अन्तर्वत्नीमप्यपहाय स्वपत्नीं गरीयोव्यापारलाभाशया सुदूरं देशान्तरं जगाम। तत्र पञ्चदश वर्षाण्यध्युष्य समुपार्जित-विपुलधनः प्रसन्नवदनो भवन् स्वदेशमागत्य स्वभवनं च प्रविश्य केनचिच्चारुणा यूना समं शयानां स्वजायां नयनविषयीकृत्य आशु च स्वमनसि कमपि असद्विचारम् आकलय्य तत्रैव नागदन्तके समवलम्बमानेन तीक्ष्णेन खड्गेन स्वभार्यां हन्तुकामो यावदेव उपरि ददर्श, तावदेव तदीया दृष्टिः तत्रैव नागदन्तकोपर्य्येव संलग्ने एकस्मिन्नतिरुचिरे काष्ठफलके काञ्चनाक्षरैः समुल्लिखितायाम् अस्यामेव 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥' इत्येवंरूपायां सूक्तिमुक्तायां पपात। अस्याश्चार्थं सुविचार्य सः स्वभार्यावधाद् विरराम; उत्थापयामास च ताम्। तदनन्तरं च सर्वां वास्तविकीं स्थितिं जायामुखादाकर्ण्य, तञ्च युवानं स्वकीयमेव पुत्रं विज्ञाय लज्जितहृदयः प्रसन्नचेताश्च भूत्वा ईश्वरस्य तथा सूक्तिरचयितुः महाकवेः भारवेः परमां कृतज्ञतां मनसा आवहमानः परां मुदमवाप।

विचार्यतां तावद् यदि सः श्रेष्ठी स्वीये हृदयसागरे समुद्गच्छता असता विचारवीचीपुञ्जेन प्रेरितः सन् सहसैव जायावधम् आत्मजवधञ्च अकरिष्यत्, तदा किं सः जायालाभजन्यं सुतमुखकमलावलोकनजन्यं च सुखं प्राप्स्यत्? नैवेत्यत्र न संशयः।

एवमेव विष्णुशर्मणा प्रणीते पञ्चतन्त्रे समागतया ब्राह्मणी-नकुल कथया के नाम विपश्चिदपश्चिमाः संस्कृतज्ञा अपरिचिताः सन्ति? अहन्तु 'न केऽपि' इति मन्ये। स्वयञ्च महाकवेः भारवेरपि विषये एका एतादृशी एव किंवदन्ती श्रुतिपथमवतरति यत्स स्वनामधन्यो भारविः आत्मानं सहृदयहृदयशिरोमणिं काव्यकाननकेसरिणं कवितानिशानिशाकरं च मन्यमानः, किन्तु स्वकीयगुरुचरणसकाशात् कदाचिदपि स्वीयप्रशंसामलभमानः, प्रत्युत तेन गुरुणा सदैव तिरस्क्रियमाण इव एकस्यां तिमिरावृतायां प्रदोषवेलायां स्वकीयं

तमेव अक्षरकाव्यसर्जनाज्ञानप्रदातारं गुरुं जिघांसुः यावदेव तदीयद्वारि किञ्चित्कालपर्यन्तं स्वकीयं करिष्यमाणं नितान्तं जघन्यं कुकृत्यं विहङ्गमदृशा भूयो विचारयति, तावदेव तदीययोः यशःपिपासितयोः श्रोत्रयोः तस्य गुरोः गुरुपत्न्याश्च तद्विषये एव जायमानो बहुप्रशंसात्मको मधुरस्नेहरसपूरपूरितो वार्तालापः समापतति। श्रवणसमकालमेव भारवेः जाड्यं विनष्टम्; नेत्रे उन्मीलिते, कर्णौ उद्घटितौ; हृदयञ्च विकसितम्। ततस्तु क्षिप्रमेव अन्तः प्रविश्य सः गुरुचरणकमलचञ्चरीको बभूव।

अत्रापि यदि गाम्भीर्येण विचारो विधीयेत तदा इदमेव सिद्धिपथमागच्छेत् यत्काचिदपि क्रिया विवेकहीना सती सुखदपरिणामदायिनी नैव भवति। यदि भारविः स्वगुरुकुटीरद्वारिसंस्थितः सन् कर्त्तव्याकर्त्तव्यविचारं नाकरिष्यत्, तर्हि निश्चप्रचमेव तदीययशश्चन्द्रिका गुरुघातकलङ्केन सर्वदाकृते कालिमानं प्राप्स्यत्; इत्यत्र कस्यापि धीमतो विसंवादो भवितुं नार्हति।

न केवलस्य भारतीयस्यैव वाङ्मयस्य इतिहासे, अपितु, समस्तस्य विश्ववाङ्मयस्येतिहासे यदि नयनयुगलं पात्येत, तर्हि नेदं तिरोहितमवशिष्येत यदनेकानि अतिरभसकृतानि कर्माणि तत्कर्तॄणां मानवानां सन्तापाय पश्चात्तापाय वा भवन्ति। यदा वयं वाल्मीकिप्रणीते रामायणे दृशं क्षिपामः, तदा अनुभवामो यद् यदि लक्ष्मणकृतविकृतिमापन्नायाः स्वस्वसुः शूर्पणखाया वाग्भिरुत्तेजितो भूत्वा लङ्काधिराजो दशग्रीवो रावणो मारीचसाहाय्येन जानकीहरणं नाकरिष्यत्, तर्हि तदीयं विजितविश्वं यशः कुलञ्च कथावशेषतां नागमिष्यत्। तत्रैव च सूक्ष्मेक्षिकया विचारे विहिते सति इदमपि अतिरोहितं बोभवीति यल्लोकाभिरामो निजजनविपदां विरामो दाशरथी रामो दण्डकारण्ये कलितकलकाञ्चनकुरङ्गकलेवरं स्वचक्षुषोः समक्षं बहुविधं विहरन्तं मारीचं सस्पृहं दर्श दर्श तदीयं काञ्चनं चर्म ग्रहीतुकामायाः स्वभार्यायाः सीतायाः 'इमं काञ्चनमृगं हत्वा एतदीयं भासुरं चर्म मदर्थमानय' इत्येवं प्रणयात्मिकां सस्मितोदीरितां वाचं निशम्य कार्याकार्यविवेकं कृत्वा तदीयवधार्थं पञ्चवटीमपहाय सुदूरं तदनुगमनं यदि नाकरिष्यत्, तर्हि

सः प्रियावियोगानलदन्दह्यमानमानसोऽपि नाभविष्यत्; न च इतस्ततः प्राणप्रेयसीं स्वकीयां सीतां मृगयमानेन तेन दुर्दान्तानामतिभीमानां राक्षसानां भीषणसमरसाम्मुख्यं कर्त्तव्यं समापतिष्यत्।

अष्टादशानां पुराणानां रचयिता महर्षिर्वेदव्यासोऽपि कार्यस्य सुविचार्य एव करणीयतां प्रतिपादयामास। स लिलेख यत्—

**"सुजीर्णमन्नं सुविचक्षणः सुतः,**
**सुशासिता स्त्री नृपतिः सुसेवितः।**
**सुचिन्त्य चोक्तं सुविचार्य यत्कृतम्,**
**सुदीर्घकालेऽपि न याति विक्रियाम्॥"**

परमविद्वान् महामतिः भर्तृहरिरपि परिणाममविचार्य विहितानां कार्याणां फलं जीवनपर्यन्तं तुदतितमामिति मन्यते। यथाहि—

**"गुणवदगुणवद् वा कुर्वता कार्यजातं**
**परिणतिरवधार्या यत्नतः पण्डितेन।**
**अतिरभसकृतानां कर्मणामविपत्तेः**
**भवति हृदयदाही शल्यतुल्यो विपाकः॥"**

संस्कृतकविकुलकमलदिवाकरः काव्यकाननकेसरी महाकविकालिदासोऽपि 'सन्तः परीक्ष्यान्यतरद् भजन्ते, मूढः परप्रत्ययनेयबुद्धिः।' इत्येवंरूपां सूक्तिमुक्त्वा विवेकस्यैव महिमानम् अतनिमानं प्रापयामासेति न संशयः। एवमेव च भारतीविभूतिः महाकविः भवभूतिरपि 'विवेकभ्रष्टानां भवति विनिपातः शतमुखः।' इति विश्वसिति। इत्थमेव भोजप्रबन्धकारो वल्लालकविरपि ब्रूते यद्—

**"किन्नु मे स्यादिदं कृत्वा किन्नु मे स्यादकुर्वतः।**
**इति सञ्चिन्त्य मनसा प्राज्ञः कुर्वीत वा नवा॥**

साम्प्रतं तु समाजे ग्रामे-ग्रामे नगरे-नगरे सर्वत्रैव विवेकस्य विमृश्यकारितायाश्च सदुपदेशाः विविधैः प्रकारैः श्रोतुं लभ्यन्ते। विप्रकृष्टे गमनस्य आवश्यकता नास्ति; भारतस्य अनेकेषु विकसितेषु विकासशीलेषु वा उत्तमश्रेणीकेषु नगरेषु प्रतिचतुष्पथं 'First stop, speed afterward' अर्थात् 'प्रथमं विरम्यताम्, गम्यतां तदनन्तरम्' इत्येवं रूपाणि वाक्यानि गन्तॄणां नयनविषयीभवन्ति; येषां विवेकपूर्णगमनानुकूलव्यापाररूपकार्योपदेशे एव तात्पर्यमस्ति।

इत्थमत्र विहङ्गमदृशा समासेन विचारे विहिते सति मदीयाल्पीयसी शेमुषी इममेव निश्चितिपथं प्रयातुकामा बोभूयते यद् विपुल-जागतिकप्रपञ्चपूर्णे अस्मिन् भूतले अविवेकेन कार्यं कुर्वतां श्रीमतामपि जनानां द्रढिष्ठान्यपि साधनानि विषण्णतां विपन्नताञ्च प्रयान्ति। तेषां श्रीमताञ्च जनानां सर्वमपि वैभवं, निखिलमपि गौरवं, समस्तमपि च कीर्त्तिपटलं सहसैव विच्छायतां प्रतिपद्यते, इत्यत्र नास्ति केषामपीतिहासजुषां विसँव्वादः। अपरतश्च विवेकेन कर्माणि कुर्वतां विमृश्यकारिणां पुरुषाणां मनोरथलताः सदैव निरापद निर्बाधं च साङ्कुराः सपल्लवाः सपुष्पाः सफलाश्च सर्वत्रैव दृष्टिपथमायाताः सन्ति; इत्यत्रापि च नास्ति केषामपि वैमत्यम्। विमृश्यकारिषु जनेषु भगवतः श्रीकृष्णस्य, राजनीतिनैपुणीनिपुणस्य चाणक्यस्य, परमराजस्य अशोकस्य तथा परमचातुरीचर्चितचित्तस्य 'कार्यं वा साधयेयम्, देहं वा पातयेयम्' इत्येवंरूपगृहीतगरिष्ठव्रतस्य देशद्रोहियवनकुल-कलङ्कविनाशनिष्णातस्य शिववीरस्य नामानि सादरं सोल्लासं च ग्रहीतुं शक्यन्ते।

एवंरीत्या सर्वमपि प्राचीनमर्वाचीनञ्चोदन्तजातं पक्षपातहीनया अदीनया च दृशा निभालं निभालं समधिगतकतिपयज्ञाने मामकीनेऽपि मानसे विवेकस्य विमृश्यकारितायाश्च महिम्ना सर्वदाकृते सर्वथैवाभङ्गुरम्, असर्पणशीलमच्युतं च पदं तथा कृतमस्ति, यथाहमिच्छामि यदस्मिन् भारतवर्षे केचिदपि जनाः काञ्चिदपि क्रियां सहसा नैव विदधीरन्; सर्वे एव जनाः स्वीयानि सर्वाण्येव कार्याणि विवेकेन सह विमृश्य एव कुर्वीरन्; येन सदा ते स्वीयेषु तेषु सर्वेष्वेव कार्येषु साफल्यं लभेरन्निति दिक्।

## लक्ष्म्यै लालसा

'हे लक्ष्मि ! हे लक्ष्मि देवि !! हे लक्ष्मि देवि !!!......निष्ठुरा मा भूः, तिष्ठ तावत् क्षणम्, मम वचस्तु शृणु......'

'अरे इयान् दर्पः ! इयान् गर्वः ! मामवधीर्यैव यासि ! तृणायापि न मन्यसे !......'

....'आः कथन्न स्यात् ? सर्वतन्त्रस्वतन्त्रा कर्त्तुमकर्त्तुं सर्वथा कर्त्तुं समर्थासि। ...मन्ये, अत एव त्वयीदं कृपाकार्पण्यं दयादैन्यं च दरीदृश्यते।' '.....जानामि देवि ! जानामि। अनेके मादृशा जनाः त्वया क्रीडनकीकृताः सन्ति। त्वं न कस्यापि कुलं वीक्षसे; न बलं सहसे; न शीलं रक्षसि; न वैदुष्यं सत्करोषि, न सत्यं सिञ्चसि; न वयो विचारयसि; न गुणान् दयसे; न चात्मानमालोकसे। अहो ते दर्पः ! अहो ते उच्छृङ्खलता !'

'अपि च लोके नैकेषां प्राणजुषां भाग्यकन्दुकाः त्वयैव हेलया अवनतिकूपे पातिताः सन्ति। अनेकेषां भाग्यभास्कराः त्वयैव विपरीतपरिस्थितिसान्द्रमेघमालया उदयकाल एवास्तमिव प्रापिताः। अनल्पानां यूनां मनोरथप्रसूनानि त्वयैव निराशानलज्वालावलीढानि कृतानि। सर्वे एव त्वयि विनिवेशितदृष्टयस्तव कृपां कामयमानाः सन्ति। मरुभूमीभूतं मदीयं जीवनोद्यानं त्वदीयेन एकेनैव कृपाकटाक्षेण, एकेनैव च मन्दमदिरस्मितेन परिमलितप्रसूनपुञ्जपूरितं गुञ्जन्मिलिन्दवृन्दं भवितुमर्हति। एतावता च तव न कापि क्षतिः, न चोपहासः।'

'अयि सर्वलोकललामे ! मनाक् तु निरीक्षस्व......' एतावती मदुपेक्षा किम्प्रयोजना ? .....'अरे त्वं तु शृणोष्येव नहि; पश्यस्यपि नहि; त्वमपि दीपशिखेव पतङ्गं मामुपहसन्ती मदसून् ग्रहीतुकामासि ! किन्तु नैतत्त्वयि उपयुज्यते।'

'अयि निष्कृपे ! अयि दयादरिद्रे ! अहमपि तु हृदयवानस्मि; अपिनाम कौपीनवानेव स्याम्;······किं कौपीनवान् न भवति भाग्यवान् ?······परं त्वयैव तु कौपीनवान् कृतोऽस्मि।······आः मामका मनोरथाङ्कुरास्त्वदीयकृपाकटाक्षामृतपूरं प्रतीक्षमाणास्तदभावे म्लायन्तः सन्ति। अपि नाम न मे रूपम्, न मे भूषा, न मे प्रियंवदत्वम्; तथापि मे शीलम्, मे मेधा, मे सत्याभिनिवेशः, मे सदसद्विवेकः मे कर्त्तव्यनिष्ठा च किन्तु न विश्वजनीनानि ? किन्तु न भद्राणि ?···

···'हन्त ! त्वं स्थितासि; शोभनं शोभनम्'······'परमिदं किम् ? त्वन्तु मां वाग्बाणैः प्रताडयितुं प्रवृत्तासि !···'

'किं किम्···किं कथयसि ?···किमिदं कथयसि यत्त्वं युगधर्मं नैव जानासि; धूर्त्तेषु धौर्त्त्यम्, शठेषु शाठ्यम्, मायाविषु च मायावित्वं नाचरसि; ललनासु लालित्यं नैव पालयसि; अधिकारिषु तेषां श्रवणमधुरं गुणप्रकथनं नैव करोषि; रहसि तेषां कर्णकुहराणि नैव चमत्करोषि; न हृदयविकारं निगूह्य सस्मितां वाचं तनुषे; न स्वार्थसाधनाय संघटनां घटयसि; न क्षेत्रवादं समाश्रयसि; न जातिवादं भजसि; न नेतॄन् सेवसे; न उत्कोचं प्रश्रयसि; न सम्बन्धमाश्रयसि; न पक्षपातं करोषि, न सपत्नीकः अधिकारिगेहान् गच्छसि; न सपत्नीकः अधिकारिणां चाटुकारजनगेहेषु विचरसि; न गुण्डाख्यान् दुष्टजनान् पालयसि; न क्लबलीलां कलयसि; न च मिथ्याचारमाचरसि। त्वन्तु सदाचारं पितरमिव, क्षमां मातरमिव, सत्यं भ्रातरमिव, दयां स्वसारमिव, कर्त्तव्यनिष्ठां पत्नीमिव, उपकारं सुतमिव, शीलं हृदयमिव, गुणान् ईश्वरमिव, दुर्गुणांश्च शत्रुमिव मन्यमानोऽसि।' ···'अरे ! अस्मिन्नराले कालेये कराले काले त्वदीयां तां पुरातनीं परनिपीडनपापनिवारिणीं सर्वगुणशालिनीं भारतीयां संस्कृतिं सभ्यतां च भौतिकाभ्युदयाभिलाषी वोभूयमानः को जनः परिपृच्छति ? को वा आद्रियते ?···अतो यदि त्वं जगदमन्दानन्दसन्दोहमनुभवितुकामोऽसि, तर्हि सपदि सर्वान् सत्यधर्मान् विहाय कालिकान् कालेयान् कालान् युगधर्मानुररीकुरुष्व; अन्यथा एवमेव रोरुद्यमानो वम्भ्रम्यणो म्रियस्व ··'।

'ओः ! शिव ! शिव ! शिव !!!···शान्तं पापम्, शान्तं पापम्। ···अरे रे मानवगुणावमानिनि ! युगधर्मीभूताधर्माखर्वगर्वगर्विते ! दयादारिद्र्यदर्पदर्पिते ! असत्पथपतिते ! प्रमत्ते ! सम्पत्ते !···मामेवं मोहयसि, इत्थञ्च मां मे विचारं च कूलङ्कषा निम्नगेव तीरतरुं पातयितुं प्रसन्नमोघं च आविलयितुमीहसे !··· परं नैवं भवितुं शक्नोति।···त्वं ममोपरि दयां कुरु नवा कुरु, परमहं पूज्यपूजाव्यतिक्रमं तथा अग्राह्यग्रहणाग्रहं कदाचिदपि नाङ्गीकरिष्ये'···।

'हः···हः···हः···हः···हः !···अरे मूर्ख !···, एवञ्चेत्ते विचारस्तर्हि अभावान्धकूपे पत; निराशानिम्नगायां निमग्नो भव; अकाले एव कालकवलितश्च भव···।'

'अरे ! क्रूरे ! कुटिलस्वभावे ! छलच्छद्मप्रसारिके ! हालाहलभगिनिके !···सागरिके ! हससि ?···हस, ···मामुपहससि ?·· उपहस; ··अट्टहासं करोषि ?···कुरु;··· मां शपसि ?···शप; किन्तु त्वमिदं स्मर्तुं नैव विस्मर यन्मुण्डितशिरसो जनस्य किं पादमुण्डनेन ? एवञ्च कदाचित्तु श्रीगुरु-शारदाजुषो ममेमाः कृष्णरजन्यो राकाः भविष्यन्त्येव; यासु ममामन्दो भाग्येन्दुरमन्दं स्वीयमाह्लादं तनिष्यतेतमाम्।···गच्छ निर्दये ! त्वं गच्छ पामरानेव; भूयो नैवं शाधि मां स्वापेऽपि कदापि···'।

## आधुनिक शिक्षा संस्थासु छात्राणां संस्कृते लेखनभाषणस्थितिः

[अरविन्दः शनैः शनैः प्रकोष्ठं प्रविशति तथा स्वीयां ज्येष्ठां भगिनीं राकां कर्गलं लेखनीं चादाय चिरेण सचिन्तं तिष्ठन्तीमनुभूय कथयति]

अरविन्दः—राकादीदि ! अद्य का वार्तास्ति ?

भवत्या प्रातराशं स्नानं पूजनं भोजनं, सर्वं विस्मृतम् ! अहं पश्यन्नस्मि यत्तिस्रो घण्टाः व्यतीताः, किन्तु न तु भवत्याः लेखनकार्यमेव किञ्चिज्जातम्; नवा चिन्ता एव समाप्ता।

राका—अरविन्द ! किं कथयेयम् ? अहं तु भूयसि धर्मसंकटे पतितास्मि।

अरविन्दः—कथम् ? का वार्ता जाता ?

राका—वार्ता इयमस्ति यन्मम प्रोफेसरमहोदयः संकायपत्रिकाकृते लेख-लेखनाय मां बहु दिनानि प्रेरयन्नस्ति।

अरविन्दः दीदि ! इदं तु समीचीनमेव। पत्रिकायां लेख-लेखनेन नाम उज्ज्वलं भवति; यशो वर्धते; ज्ञानं च परिष्कृतं जायते। अस्मिन् कार्ये भवती कथं धर्मसंकटं मन्यते ?

राका—अरविन्द ! त्वदीयमिदं कथनं सर्वथैव सत्यमस्ति। किन्तु अहन्तु लेख-लेखने एव असमर्थास्मि। अत एव धर्मसंकटम् अनुभवामि

अरविन्दः—दीदि ! भवती तु एम. ए. द्वितीयवर्षे पठति। कक्षायां सर्वाधिका अङ्काः अपि भवत्याः एव सन्ति। भवत्या एकस्मिन् दिने इदमपि उक्तमासीत् यत् प्राध्यापका एवं कक्षायाः सर्वे छात्राः भवत्याः प्रशंसामपि कुर्वन्ति। पुनरपि भवती लेख-लेखने कथम् असमर्थास्ति ? सुधादीदी तु एम्. ए. प्रथमवर्षे एवास्ति। किन्तु सा

एकस्मिन् दिवसे कथयन्ती आसीत् यत्तया 'पञ्चापसमस्या' शीर्षको लेखः स्वकीयप्रोफेसरमहोदयाय लिखित्वा दत्तोऽप्यस्ति।

राका—(सोच्छ्वासम्) तात ! त्वं नहि जानासि। सुधायाः समीपे विचारैः सह भाषापि अस्ति। अनेनैव कारणेन सा लेखने भाषणे च समर्था भवति। किन्तु मम समीपे केवलं विचारा एव सन्ति; भाषा नास्ति। अतोऽहं लेखने भाषणे च असमर्था भवामि।

अरविन्दः—दीदि ! इदं कथम् ?सुधादीदीसमीपे भाषा कथम् अस्ति ? भवत्याश्च समीपे सा कथं नास्ति ? भवत्यौ उभे एव पठतस्तु एम्. ए. कक्षायामेव। पुनः इदमन्तरं कथम् ?

राका—अरविन्द ! वस्तुतो वार्ता इयमस्ति यत् सुधा अंग्रेजीसाहित्यस्य एम्. ए. कक्षायां पठति। अंग्रेजीविषये प्रारम्भादेव सर्वञ्चित् अंग्रेजीभाषायामेव पाठ्यते लेख्यते च। तत्र परीक्षापि अंग्रेजीभाषायामेव भवति। छात्राः उत्तराण्यपि अँग्रेजीभाषायामेव लिखन्ति। ते परस्परं वार्तालापमपि अंग्रेजीभाषायामेव कुर्वन्ति। अतः अंग्रेजीच्छात्राणां अंग्रेजीभाषायाः ज्ञानं शोभनं भवति। अतस्तेषां कृते लेखलेखनमपि कठिनं न भवति। परन्तु अहं संस्कृतसाहित्यस्य एम्. ए. कक्षायां पठामि। अत्र प्रारम्भादेव सर्वञ्चिद् हिन्दीभाषायामेव पाठ्यते लेख्यते च ।अस्माकं परीक्षा अपि हिन्दीभाषाया माध्यमेन भवति। वयम् उत्तराण्यपि हिन्दीभाषायामेव लिखामः। कक्षायां कोऽपि केनापि सह संस्कृतभाषायां कदापि वार्तालापं नैव करोति। प्राध्यापका अपि परस्परमपि संस्कृतभाषायां वार्तालापं कुर्वन्तो न विलोक्यन्ते। अतो न केवलं ममैव, अपितु सर्वेषामेव छात्राणां संस्कृतभाषाविषयकं ज्ञानं नितान्तमल्पमस्ति। मम च प्रोफेसरमहोदयस्य कथनमस्ति यत् पत्रिकायां संस्कृतानुभागः पृथगस्ति। तस्मिन्ननुभागे ये लेखाः प्रकाशिता भविष्यन्ति, ते संस्कृतभाषायामेव भविष्यन्ति। अनेनैव कारणेन अहं लेखलेखने आत्मनः अक्षमतामनुभवामि।

अरविन्दः—(भालमाकुञ्च्य विचिन्त्य च) दीदि ! भवत्या किमुक्तम् ? किं संस्कृतं संस्कृत—

भाषायां न पाठयित्वा हिन्दीभाषायां पाठ्यते ? किं च संस्कृतस्य परीक्षा संस्कृतभाषायां न भूत्वा हिन्दीभाषायां भवति ?

राका—आम् अरविन्द ! इदमेव बोभूयते । न केवलम् अस्मदीयो विश्वविद्यालयः एव, अपितु देशस्य सर्वे एव विश्वविद्यालया अनेनैव प्रकारेण संस्कृतभाषायाः मूले कुठारपातं कुर्वन्तः सन्ति ।

अरविन्दः– दीदि ! एतादृशी वार्ता नास्ति । ये पाश्चात्यपद्धति-पोषका विश्वविद्यालयाः सन्ति, तेष्वेव संस्कृतभाषाया एषा विडम्बना भवितुं शक्नोति । अस्माकं वाराणसेयसंस्कृतविश्वद्यिालये तु संस्कृत-भाषाया एव साम्राज्यं वरीवृत्यते । तत्र सर्वासु परीक्षासु संस्कृत-भाषाया एव प्रयोगो भवति ।

राका—आम् अरविन्द ! त्वं सत्यं कथयसि । स विश्वविद्यालय-स्तु संस्कृतभाषायाः सत्यां सेवां कुर्वन्नस्ति । किन्तु अन्ये पाश्चात्य-पद्धतिपरायणा विश्वविद्यालयास्तु संस्कृतभाषाया नाम्नि हिन्दी-भाषायामेव पठन-पाठन-प्रश्नपत्र निर्माण-परीक्षाग्रहणादीनि सर्वाणि कार्याणि कुर्वन्ति । अहन्तु अनुमिनोमि यदेषां विश्वविद्यालयानां कुल-पतयः संस्कृतपाठ्यग्रन्थसमितिसदस्याश्च यदि अस्मिन् विषये ध्यानं नैव दास्यन्ति, तर्हि निकटभविष्यत्काले भारतवर्षे एव संस्कृतभाषायाः चिता ज्वलिष्यति ।

अरविन्दः --दीदि ! इमे वराका अपि अस्याः समस्यायाः समा-धानं तावत् न कर्त्तुं प्रभवन्ति, यावत् माध्यमिकशिक्षापरिषदधि-कारिणः संस्कृतविषयस्य पठन-पाठन-प्रश्नपत्रनिर्माणादीनि सर्वाणि कार्याणि संस्कृतभाषायां नैव कारयन्ति ।

राका– आम् अरविन्द ! इदं तव कथनं नितान्तं व्यावहारिक-मस्ति । शिक्षाधिकारिभिः प्रारम्भादेव संस्कृतस्य पठनं पाठनं च संस्कृतभाषायामेव कारयितव्यम् । तदा एव विश्वविद्यालयीयकक्षा-स्वपि संभवति ।

अरविन्दः—एतदर्थं देशस्य समस्तविश्वविद्यालयानां कुलपतयः तथा तत्रत्यसंस्कृतपाठ्यग्रन्थसमितिसदस्याः देशस्य समस्त-माध्यमिकशिक्षापरिषदधिकारिणां तथा तत्रत्यसंस्कृतपाठ्यग्रन्थसमि-तिसदस्यानां समीपे स्वीयान् सुदृढान् प्रस्तावान् प्रेषयेयुः यत् 'सर्वत्रैव

संस्कृतपाठनस्य माध्यमं संस्कृतभाषा एव भवेत्' इति; मन्ये, तदैवेदं संभवम् ।

राका—अहं तु कथयामि यत् उत्तरप्रदेशस्य एव माध्यमिक-शिक्षापरिषद् तथा सर्वे विश्वविद्यालयाः यदि एतदर्थं प्रयासं कुर्युः, तदापि संस्कृतभाषायाः, मन्ये, महानुपकारो भवेत् । पुनः उत्तर-प्रदेशस्य अनुकृतिं भारतस्य, मन्ये, अन्ये प्रदेशाः करिष्यन्त्येव ।

अरविन्दः—दीदि ! भवती सत्यं कथयति । यदि च इदं न भवति, तर्हि संस्कृतभाषा तु रसातलं यास्यति । केवलं तस्याः विचारा एव हिन्द्यां लप्स्यन्ते । अग्रे च चलित्वा हिन्दी तस्या विचारानपि यदा आत्मसात्करिष्यति, तदा अस्याः सर्वथा विलयो भविष्यति ।

राका—अत एव तु कथयामि यद् भारतीयमाध्यमिकशिक्षापरि-षदधिकारिभिः, तत्रत्यसंस्कृतपाठ्यग्रन्थसमितिसदस्यैः, एवमेव च भारतीयविश्वविद्यालयानां कुलपतिभिः तथा तत्रत्यसंस्कृतपाठ्य-ग्रन्थसमितिसदस्यैः संस्कृतभाषायाः शरीरे आत्मनि च लग्नोऽयं क्षय-रोगः अतिशीघ्रं चिकित्सितव्यः ।

अरविन्दः—दीदि ! अथेदं कथयतु यद् भवती संकायपत्रिकायां लेखं दातुं वस्तुतो वाञ्छति न वा ?

राका—अरविन्द! अहं वस्तुतो वाञ्छामि लेखं दातुम् । मया हिन्दीभाषायां लेखो लिखितोऽप्यस्ति । मम लेखस्य शीर्षकं 'नारी-णाम् आजीविका' अस्ति । गृहाण, एतं पठित्वा पश्य (लेखं ददाति) ।

अरविन्दः—[लेखमादाय पठति हर्षं चानुभवति] दीदि ! अत्यन्तं प्रभावशाली अयं लेखो मानसं प्रविशति इव ।

राका—किन्तु संस्कृतभाषाया ज्ञानस्य अभावेन अस्यानुवादमपि कर्त्तुं न पारयामि । किं कुर्याम् ? अहन्तु ग्लानिमनुभवामि ।

अरविन्दः—दीदि ! अहं तु प्रथमकक्षायामेव पठामि । अतो भवत्याः लेखस्य अनुवादकरणे अहं पूर्णतया समर्थो नास्मि । किन्तु चिन्तां न करोतु भवती । संस्कृतपाठशालायां मां ये शास्त्रिमहोदयाः पाठयन्ति, तेषां संस्कृतं बहुललितं श्रुतिमधुरं च वर्त्तते । ते सदैव

सर्वान् संस्कृतभाषायामेव पाठयन्ति। अहं भवत्याः लेखस्य संस्कृत-भाषायामनुवादं तैरेव कारयिष्यामि।

राका—(योजनां श्रुत्वा प्रसन्ना भूत्वा) अरविन्द ! त्वं बहु शोभनोऽसि। मह्यं त्वं भृशं रोचसे। त्वं स्वकीयगुरुचरणान् गत्वा इदमपि प्रार्थय यत्ते मामपि संस्कृतभाषां पाठयितुं कृपां कुर्युः। मम मनसि संस्कृतभाषायां भाषणस्य लेखनस्य च प्रबला इच्छा वरीवृत्यते। कथय, ते मां पाठयिष्यन्ति न वा ?

अरविन्दः—दीदि ! मम गुरवः अत्यन्तं सरलचेतसः तथा प्रसन्न-वचसः सन्ति। ते अवश्यमेव मम प्रार्थनां स्वीकरिष्यन्ति। अहं सम्प्रत्येव गच्छामि (लेखमादाय गन्तुमिच्छति)।

राका—नहि नहि अरविन्द ! साम्प्रतं नैव। त्वं यदा पठनाय संस्कृतपाठशालां गमिष्यसि, तदैव कथनीयम्।

अरविन्दः—नहि दीदि ! तदा तु ते पाठने एव व्यस्ताः भवन्ति। साम्प्रतं ते गृहे सावकाशाः भवेयुः। अतो भवत्याः लेखस्यानुवादं त्वरितमेव करिष्यन्ति। भवती उत्तिष्ठतु; स्नानभोजनादिकं च करोतु; तथा विश्वविद्यालयाय सज्जीभवतु। तावदहम् अनुवादं कारयित्वा समागच्छामि।

[अरविन्दः सत्वरं निर्गच्छति; राका पुलकितदेहा भूत्वा दैनिक-कर्माणि प्रारभते।]